श्रीः

श्रीमते रामानुजाय नमः

वेदान्तग्रन्थरत्नमालायाः

चतुर्थं रत्नम्.

# ईशावास्योपनिषत्

इय च

श्रीमन्निगमान्तमहादेशिकैरनुगृहीतेन भाष्येण

श्रीमत्कूरनारायणमुनिभिः प्रणीतया व्याख्यया

श्रीशैलानन्तपूरुषसिंहासनासीनैः

विद्वच्छ्रीरङ्गाचार्यैः प्रणीतेन भाष्येणच

श्रीमत्परमहंसपरिव्राजकाचार्यैः श्रीरङ्गनारायणयतीन्द्रैः अनुगृहीतेन अधोनिर्दिष्टेन

प्रमाणानामाकरनिर्देशेन च उद्भासिता

श्री. अ. वी. नरसिंहाचार्यैः, अन्यैश्च विद्वद्भिः संशोधिता

आर्. वेङ्कटेश्वरसभाध्यक्षैः आनन्दमुद्रायन्त्रालये मुद्रिताच

विजयतेतराम्

1914

॥ श्रीमते रामानुजाय नमः ।

# ईशावास्योपनिषत्

इयं शुक्लयजुर्वेदान्तर्गता अष्टादशमन्त्रात्मिका । इयं च भाष्यकारैरुदाहृतासु प्रतिष्ठितप्रामाण्यासु दशसूपनिषत्स्वन्यतमा। यदुच्यते—

'ईशकेनकठप्रश्नमुण्डमाण्डूक्यतित्तिरिः । ऐतरेयं च च्छान्दोग्य बृहदारण्यकं दश' ॥

इति । अत्र ईशशब्देन ईशावास्योपनिषत्, मुण्डशब्देन मुण्डकोपनिषत् तित्तिरिशब्देन तैत्तिरीयोपनिषच्च विवक्षिताः । अन्याश्च काम स्वसिद्धान्तध्वान्तस्थिरकुतुकैः कैश्चनोत्पाद्यन्ते । श्रद्धाजडैस्ता अपि परिगृह्यन्ते । तासां च काममस्तु दीर्घमायुः । यतः सम्प्रति न वयमत्र दीदांसामहे ॥

इयंचोपनिषद्बहुभिर्व्याख्याता । तत्र विशिष्टाद्वैतमतानुसारेण कवितार्किकसिंहसर्वतन्त्रस्वतन्त्रश्रीमद्वेदान्ताचार्यसूरिभिर्विरचितभाष्येण, कूरनारायणमुनिभिः प्रणीतया व्याख्यया, उभयवेदान्तप्रवर्तकैः श्रीशैलानन्तपूरुषसिंहासनासीनैः विद्वच्छ्रीरङ्गाचार्यस्वामिभिः प्रणीतेन भाष्येण च समयोज्यत। एकस्यैव विषयस्य सति भाष्यत्रये भवत्युपपादनभेदेन ग्रहणसौकर्यमिति वयमेव किमपि भाष्यमनुपेक्ष्य अत्र समयोजयाम । एवम् इतश्च यथावकाशं यथावेदं च केनाद्युपनिषदामपि भाष्याणि मुमुद्रयिषामः । अनेन च शारीरकभाष्यमधिजिगांसमानानामस्तु महत्सौकर्यमिति तेन च श्रीमतः परमपुरुषस्य प्रसादः फलेग्रहिरस्त्विति प्रार्थयामहे ॥

एतदुपनिषदर्थसङ्ग्रहस्तु—इदंभाष्यकारैः श्रीमद्भिः श्रीशैलानन्तपूरुषसिंहासनासीनैः विद्वच्छ्रीरङ्गाचार्यैः अष्टादशमन्त्रभाष्यावसाने—'अयमत्रैतदुपनिषदर्थतात्पर्यसङ्ग्रहः' इत्यारभ्य सुस्पष्टमुपपादितः॥ यथा—

'प्रथममन्त्रेण सर्वेश्वरस्य नियन्तृत्वशेषित्वे जगतो नियाम्यत्वशेषत्वेच तत्तदसाधारणाकारौ ज्ञापयित्वा तद्बलेन मुमुक्षोः स्वसम्बन्धिसर्ववस्तुषु कर्तृत्वममताफलविषयत्रिविधत्यागलक्षणज्ञानविशेषेण संस्करणपूर्वकं तेषु भगवद्भोगान्तर्गततयैव स्वभोगविधानमुखेन वक्ष्यमाणपरविद्याङ्गभूतकर्मयोगापेक्षितो ज्ञानविशेषलक्षणसंस्कारविशेषो दर्शितः । स च ज्ञानविशेषः—भगवानेव स्वनियाम्यस्वरूपस्थितिप्रवृत्तिस्वशेषतैकरसेनानेनात्मना स्वकीयैश्च देहेन्द्रियान्तःकरणैः स्वकीयैरेव कर्मभिः स्वकीयद्रव्यमयैरेव भोगैः स्वात्मानं स्वयमेव प्रीतं कारयति —इत्येवमादिरूपः ॥

द्वितीयमन्त्रे च—वक्ष्यमाणपरविद्याङ्गतया यावज्जीव यथाधिकारं कर्मयोगोऽप्यनुष्ठेयतया दर्शितः । कर्मयोगस्यार्वाचीनफलद्वारा बन्धकत्वभ्रमपरिहाराय दर्शितत्यागविशेषलक्षणसंस्कारबलेन अर्वाचीनफलसम्बन्धलक्षणतल्लेपासम्भवोऽपि ज्ञापितः ॥

तृतीयमन्त्रे च — प्रथमद्वितीयमन्त्रपर्यवसन्नार्थभूतशेषित्वनियन्तृत्वलक्षणपरस्वरूपयाथात्म्यशेषत्वनियाम्यत्वलक्षणस्वस्वरूपयाथात्म्यैतदुभयज्ञानपूर्वकपरविद्याङ्गकर्मयोगानुष्ठानविरहिणाम् आत्मघ्नत्वेन निन्दापूर्वकं परविद्यावैधुर्येण क्रमेण महानर्थप्राप्तेरवर्जनीयत्वाभिधानमुखेन दर्शितलक्षणकर्मयोगनिष्ठाया अतिशीघ्रमेवावश्यसम्पादनीयता दर्शिता ॥

चतुर्थादिभिः अष्टमान्तैः पञ्चभिर्मन्त्रैः —अनेकात्मसु सत्सु तत्रैकस्य पर कथं नियन्तृत्वशेषित्वे ? कथं वा अन्येषा सर्वेषां चेतनाचेतनानाम् अविशेषेण नियाम्यत्वशेषत्वे ? इत्याशङ्क्य परिहारार्थम् अत्र विवक्षितपरविद्यायामनुसन्धानार्थं च परमात्मनोऽघटितघटनासामर्थ्याखिलभूतान्तरात्मत्वादि-कल्याणगुणाश्रयत्वं, तथाविधाकारानुसन्धानफलप्रदर्शनमुखेन तदनुसन्धानावश्यकता च प्रत्यपादि ॥

नवमप्रभृतिरेकादशपर्यन्तैस्त्रिभिर्मन्त्रैः—मुमुक्षोः कर्मविद्ययोरेकैकमात्रानुष्ठानेऽनर्थपर्यवसाना-वर्जनीयताज्ञापनमुखेन कर्मसहचरिताया एव विद्याया अनुष्ठेयता प्रतिपादिता ॥

द्वादशादिभिश्चतुर्दशपर्यन्तैस्त्रिभिर्मन्त्रैः—सामान्यतः शरीरप्राप्तिगर्भितपुरुषार्थोद्देशेन वा सा-मान्यतोऽशरीरत्वप्राप्तिगर्भितपुरुषार्थोद्देशेन वा यथोक्तलक्षणविद्यानुष्ठाने प्रथमपक्षे नश्वरप्राकृतभोगै श्वर्यप्राप्तिपर्यवसानेन अनिष्टप्राप्तेः, द्वितीयपक्षे-यावदात्मभाविस्वरूपविरुद्धकैवल्यलक्षणमोक्षप्राप्तिपर्यव-सानेन अनिष्टप्राप्तेश्च अवर्जनीयता, ततः एकविधशरीरनिर्मूलनिवृत्त्यपरविधशरीरप्राप्त्युभयगर्भितपुरु-षार्थोद्देशेन यथोक्तलक्षणविद्यानुष्ठान एव स्वरूपानुगुणपरमपुरुषार्थलक्षणमोक्षप्राप्तिश्च प्रतिपादिता ॥

ततः पञ्चदशादयोऽष्टादशपर्यन्ताश्चत्वारो मन्त्राः—यथोक्तलक्षणविद्याकरणतयाऽनुसन्धेयाः स्वरूपानुगुणपरमपुरुषार्थलक्षणमोक्षप्रार्थनागर्भा अव्यभिचारेण तथाविधमोक्षप्राप्तिप्रयोजका आवश्य-कोपास्याकारानुसन्धानगर्भा अन्तरादित्यवर्तिपरमपुरुषविषयपरविद्यापराः प्रवृत्ताः—इति '—इति ॥

इदंभाष्यकारैः श्रीमद्भिः विद्वच्छ्रीरङ्गचार्यस्वामिभिरियमुपनिषदामूलचूडमवलोकपदवीमुपल-म्भिता विशुद्धिं परमानुभवतीति विश्वसन्तो वय कृतज्ञाः परश्शत धन्यवादानेभ्यो महार्हेभ्य उप-हरामः। श्रीमद्भिः श्रीरङ्गनारायणयतीन्द्राख्यानीमलंकुर्वाणैः परमहसपरिव्राजकाचार्यैः साकेतरामानुज-संयमीन्द्रैरपि इयं सतृणमवलोकिता क्वचित्क्वचित्प्रमाणानामाकरसंयोजनेन संभाविताचेति कार्तज्ञं बहुशः प्रकाशयामः। अपि च -एतैर्महाभागैः श्रीभाष्य श्रीभागवतं भगवद्गीतेत्येस्मन्मुद्रितमशेषमेव परया श्रद्धया महता श्रमेण सशोधितम्, आकारसंयोजनेन प्रमाणव्याख्याप्रसादनेन पुस्तकप्रदानेन च सुबहूपकृतमिति चिरान्निगूढं कार्तज्ञमाविष्कुर्वन्त इदमेव सुभाषितं सततमावर्तयामो मनसि, यत् 'परोपकाराय सतां हि सम्पदः' इति ॥

सर्वज्ञः सर्वसाक्षी सकलतनुभृतां सर्वथा सन्नियन्ता
सर्वत्र व्याप्यवर्ती सकलगुणगणैस्सर्वदा सेव्यमानः।
स्वामी नः श्रीसहायः सरसिजनयन्नः सर्ववेदैकवेद्यः
सर्वाभीष्टप्रदोऽसौ शमयतु दुरितं शर्म वो निर्मिमीताम् ॥

इति,

**श्री-ति. अ. ति. कुमारताताचार्यः,**

**कविभूषणः.**

श्रीमते रामानुजाय नमः.

# ईशावास्योपनिषत्.

## भाष्यत्रयोपेता.

ईशावास्यमिदँ सर्वं यत्किञ्च जगत्यां जगत् ।
तेन त्यक्तेन भुञ्जीथा मा गृधः कस्यस्विद्धनम् ॥

### ( श्रीमद्वेदान्तदेशिकविरचितमीशावास्योपनिषद्भाष्यम्. )

श्रीमान्वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि ॥
येनावास्यमिदं सर्वं चेतनाचेतनात्मकम् ।
विशुद्धसद्गुणौघं तं वासुदेवमुपास्महे ॥ १ ॥

---

### ( श्रीकूरनारायणीयमीशावास्योपनिषद्भाष्यम्. )

विश्वं व्याप्यं धार्यं येन विचित्राश्च शक्तयो यस्य ।
श्रीरङ्गेशं तमृषिं तनुवाक्चित्तैरुपास्महे पुरुषम् ॥ १ ॥
सर्वेशानस्सर्वभूतान्तरात्मा दोषानर्हस्सर्वविद्यैकवेद्यः ।
कर्माराध्यस्साध्यभक्त्येकलभ्यः श्रीमान्व्यक्तो वाजिनां संहितान्ते ॥ २ ॥

---

### { श्रीवेङ्कटाद्रि श्रीमदनन्तापुरुषाचार्यसिंहासनस्थ श्रीरङ्गाचार्यस्वामिविरचितमीशावास्योपनिषद्भाष्यम्. }

श्रियःकान्ताय नमः ॥
श्रीमते विष्वक्सेनाय नमः ॥
श्रीमते रामानुजाय नमः ॥
श्रीमदनन्तार्यमहागुरवे नमः ॥
श्रीमते वरवरमुनये नमः ॥

श्रीमान् वेङ्कटशैलाद्धरिद्यनोऽद्य दक्षिरदिवि दीप्रः ।
दहतु सुदर्शनमहसा सत्पथसञ्चारिवैरि सन्तमसम् ॥ १ ॥

---

१. अयमाचार्यः क इति चेत्, केचिद्वदन्ति-'अकश्चिन्मुनिवरः' इति । 'ननु श्रीकूरेशमिश्रशिष्यः सुदर्शनशतकादिग्रन्थकर्ता' ॥

वे॥सर्वेशानस्सहजमहिमा सर्वभूतान्तरात्मा सर्वान् दोषान् स्वयमतिपतन् सर्वविद्यैकवेद्यः ।
कर्माध्यक्षः कलुषशमनः कोऽपि मुक्तोपभोग्यस्सिद्धोपायः स्फुरति पुरुषो वाजिनां संहितान्ते ॥

ईशावास्यमिदं सर्वमित्यादि यदनूच्यते ।
शिष्यं प्रति गुरोरेतद्ब्रह्मविद्यानुशासनम् ॥ ३ ॥
संभूतोदाहृतं सर्वं विनियोगपृथक्त्वतः ।
विद्यार्थं स्यादिति व्यक्तं निबन्धोऽस्य तदन्ततः ॥ ४ ॥

---

कू ॥ यस्याचार्यैः कृतं भाष्यं गम्भीरं विदुषां मुदे ।
बालामोदाय तद्भावो यथाभाष्यं प्रकाश्यते ॥ ३ ॥
ईशावास्यानुवाकोऽयं वाजिनां संहितान्तगः ।
शिष्याय गुरुणा यस्मिन्ब्रह्मविद्योपदिश्यते ॥ ४ ॥
कर्मणां संहितोक्ताना विनियोगपृथक्त्वतः ।
विद्याङ्गतास्ति तद्व्यक्त्यै निर्बन्धोऽस्य तदन्ततः ॥ ५ ॥

'ईशावास्यमिदं सर्वम्' इत्येषोऽनुवाकोऽष्टादशमन्त्रात्मकः । एते च मन्त्राः पुरुषसूक्तोदितपरमपुरुषतत्स्वरूपतदुपासनप्रपदनतत्प्राप्तिरूपतत्त्वोपायपुरुषार्थानां सङ्ग्रहेण सम्यक्प्रतिपादकत्वात्कर्मसु कल्पसूत्रकृता कात्यायनेन विनियुक्तत्वाच्च उपनिषत्सारभूताः । भगवद्गीतादिभिश्च एतेषां मन्त्राणामुपबृंहणं तत्र तत्र परस्तात्प्रदर्शयिष्यते । नन्वेव ब्रह्मकाण्डे बृहदारण्यक एवैषां पाठस्स्यात् , न

---

श्री ॥ श्रीरामानुजयोग्यनन्तगुरुराट्सौम्योपयन्त्राह्वयै-
र्यो वेषैरपुनाज्जगत्कुलगुरुर्यस्यात्र नो मध्यमः ।
आस्ताञ्चापि तथा न आद्यचरमावाम्नायसिन्धुद्वयी-
पारप्रापणनाविकौ फणिपतिस्सोऽयं विधत्तां जयम् ॥ २ ॥
आध्यात्मिक्यां सरण्यां मम हृदयरथं स्वामियन्त्रश्वरूपाः
श्रीशश्रीभाष्यकारो भुवनगुरुवरो रम्यजामातृयोगी ।
सज्जास्सञ्चारयन्तामविषममधुनाऽनुज्झितप्राच्यलेखं
दुर्मानोद्वृत्तवाहो न गमयति यथा दुष्पथं वक्रकर्षी ॥ ३ ॥
वेदान्ताः काननान्ताः कुमतिकृतिमयैः कण्टकैर्दुर्गमार्गा
दुस्साधान्तस्स्थबोधास्स्वयमतिगहनास्सन्ति घण्टापथैस्तान् ।
आरामान् वाऽभिरामान् सुकरविहरणान् कर्तुमद्याखिलानां
श्रीरङ्गं सान्तरङ्गं कलयतु सफलं प्रोद्यतं श्रीनिवासः ॥ ४ ॥
श्रीशैलानन्तपुरुषगुरुपरिबृढदिव्यसिंहपीठस्थः ।
ईशावास्योपनिषद्भाष्यं श्रीरङ्गसूरिरातनुते ॥ ५ ॥

काण्वमाध्यन्दिनभेदभिन्नाना वाजसनेयिनां पञ्चाशदध्यायात्मकशुक्लयजुर्वेदसंहितायामेकोनपञ्चाशाध्यायपर्यन्तात्कर्मकाण्डरूपाद्भागादनन्तरश्चरमो ज्ञानकाण्डरूपोऽयं पञ्चाशोऽध्याय ईशावास्योपनिषत्संज्ञो व्याख्यायते ॥ ६ ॥ अयमध्यायः काण्वैरष्टादशमन्त्रात्मको माध्यन्दिनैस्सप्तदशमन्त्रात्मकश्च पठ्यते ॥ ७ ॥ अयं खल्वध्यायः कर्मकाण्डरूपसंहिताघटकतया पठ्यमानोऽप्यत्रत्यमन्त्राणां कर्मसु कल्पसूत्रकारादिभिर्विनियोगादर्शनात्, बर्हिर्लवनाद्यनुष्ठेयकर्मप्रकाशकानां 'बर्हिर्देवसदनं दामि'

वे॥ तत्र प्रथममचिद्विकाराधिष्ठितस्य स्वतन्त्रात्मभ्रमादिपरिजिहीर्षया सर्वस्य परमपुरुषायत्तस्वरूप-स्थितिप्रवृत्तिमभिप्रेत्याह—**ईशा वास्यमिदं सर्वं यत्किञ्च जगत्यां जगदिति।** **इदं**—तत्तत्प्रमाण-सिद्धमीश्वरव्यतिरिक्तं चिदचिदात्मकम्, **ईशा** 'ज्ञाज्ञौ द्वावजावीशनीशौ' इत्यादिषु जीवादत्यन्त-

---

कू॥संहिताया,प्रयोजनाभावादिति चेन्न; एतेषु सारभूताना पञ्चमन्त्राणां बृहदारण्यकेऽपि पाठदर्शनात्। 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' 'विद्यां चाविद्यांच यस्तद्वेदोभयँ सह। अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते' इति अविद्याख्यस्य कर्मविशेषस्य-ब्रह्मविद्यायां विनियुक्तत्वेन संहितायामुदाहृतं कर्मजातं विद्याया अप्यङ्गमिति विशदीकरणार्थमेषां संहितान्तपाठोपपत्तेश्च। अतः कर्मसु विनियुक्तत्वात्पूर्वोक्ततत्त्वोपायप्रयोजनप्रतिपादनपरत्वाच्चोपनि-षद एवैते मन्त्रा इति सिद्धम्॥

तत्र तावदाचार्यः, प्रथमं रजस्तमःप्रचुरदेहेन्द्रियादिविशिष्टत्वात् 'ईश्वरोऽहमहं भोगी' इत्यादिश्रीभगवद्गीतोक्तप्रक्रियया 'स्वतन्त्रोऽहं, देवतान्तरपरतन्त्रोऽहम्'इति च भ्राम्यतस्तत्त्वबुभुत्सया चोपसन्नस्य शिष्यस्य स्वतन्त्रात्मभ्रमादिनिवृत्त्यर्थं चिदचिदात्मकस्य कृत्स्नस्य प्रपञ्चस्य परमपुरुषायत्त-स्वरूपस्थितिप्रवृत्तित्वमुपदिशति—**ईशावास्यमि**ति। **इदम्**—अचिन्त्यविविधविचित्ररचनया ब्रह्मा-दिस्तम्बपर्यन्तक्षेत्रज्ञमिश्रतया च प्रत्यक्षादिप्रमाणसिद्धमित्यर्थः। **सर्वम्**—ईश्वरव्यतिरिक्त भोग्यभोक्तृ-रूपं सर्वम्। 'ईशा' इति तृतीयैकवचनान्तम्, सर्वनियन्त्रेत्यर्थः, संकोचे मानाभावात्। महापुरुषे-णेति यावत्, 'योऽसावसौ पुरुषः' इति अनुवदिष्यमाणत्वात्। स एव हि सर्वस्येष्टे, तथा च श्रुत्य-

---

श्री॥इत्यादीनामिवानुष्ठेयकर्मप्रकाशकत्वलक्षणकर्मविनियोगव्यञ्जकलिङ्गादर्शनेन लिङ्गबलादपि तदसि-द्धेः,प्रत्युतात्मयाथात्म्यादिप्रतिपादनमुखेन विद्याविनियोगस्यैवावगमाच्च ज्ञानकाण्डरूप एव॥८॥ न च, यद्ययमध्यायो ज्ञानकाण्डरूपः, तर्हि वाजसनेयिनां ज्ञानकाण्डरूपायां बृहदारण्यकोपनिषदि कुतोऽयं न पठ्यते? बृहदारण्यकोपनिषदपि वाऽनेनैव सह संहितान्तर्गततया तदन्त एव कुतो न पठ्यते? अतोऽयं कर्मकाण्डसंहितानन्तर्गततया पृथक्पठ्यमानज्ञानकाण्डभूतबृहदारण्यकोपनिषदनन्तःपातित्वा-त्प्रत्युत कर्मकाण्डरूपसंहितान्तःपातित्वाच्च, कर्मकाण्डशेषभूत एव स्वीकर्तुमुचित इति वाच्यम्; अत्र-त्यकतिपयमन्त्राणा बृहदारण्यकोपनिषद्यपि दर्शनेनास्य ज्ञानकाण्डरूपतायाः प्रत्यभिज्ञाप्यमानत्वात्, कर्मकाण्डाज्ज्ञानकाण्डस्य पृथक्पाठ्यत्वेऽपि सङ्ग्रहेण विद्यास्वरूपं प्रदर्श्य कर्मकाण्डविहितकर्मणामात्म-याथात्म्यज्ञानेन त्रिविधत्यागसंस्कृतानामाकारान्तरेण तदङ्गताज्ञापनार्थमेव ज्ञानकाण्डरूपस्याप्येतदध्या-यलक्षणाल्पभागस्य कर्मकाण्डसंहितान्ते पाठोपपत्तेश्च॥ ९॥ एतदध्यायगतमन्त्राणा बृहदारण्यकोप-निषदि षष्ठाध्यायचतुर्थब्राह्मणसप्तमाध्यायपञ्चदशब्राह्मणादौ किञ्चिद्भेदेन पाठो दृश्यमानोऽस्या-ध्यायस्य ज्ञानकाण्डरूपत्वं स्पष्टयति॥ १०॥ अतोऽयमध्यायो ज्ञानकाण्डरूप एव॥ ११॥

प्रथमं बुभुक्ष्वधिकारिककर्मकाण्डप्रतिपन्नकेवलकर्मफलानित्यत्वगतागतपुनःपुनरवर्जनीयसंसार-बन्धसंभवविज्ञाननिर्विण्णहृदयस्य मुमुक्षोरधिकारिणस्संसारबन्धनिवृत्त्यनन्तस्थिरफलब्रह्मप्राप्तिहेतुसाङ्ग-ब्रह्मविद्यामुपदिदिक्षुर्वेदपुरुषः प्रथमं ब्रह्मविद्यां प्रस्तुत्य तदनु तदङ्गतया विधास्यमानानां कर्मणां संस्कारविशेषभूतं बुद्धिविशेषलक्षणं त्यागमुपदिशति—**ईशावास्यमि**त्यादिना प्रथममन्त्रेण॥ १२॥

अस्य प्रतिपदविवरणम्—**इदं** प्रत्यक्षादिप्रमाणसिद्धं, **सर्वं** चिदचिदात्मकं वस्तुजातं स्वेतर-रक्षकत्वं जगदित्यर्थः, **ईशा**-ईष्टे इतीट्, 'ईश-ऐश्वर्ये' इत्यस्य धातोरदादिगणघटकस्य 'क्विप्च' ३।२।७६॥ इत्यनुशासनेन कर्तरि क्विबन्तोऽयं शब्दः। तेन-ईशा-सर्वेश्वरेण श्रीमन्नारायणेन, **वास्यं**

वे॥विलक्षणतया प्रख्यातेन सर्वनियन्त्रा पुरुषोत्तमेन, **वास्यं**—व्याप्यमित्यर्थः। सर्वाधारे स्वस्मिन् स्वेन वसनीयं वा। स्मर्यते हि ' सर्वत्रासौ समस्तं च वसत्यत्रेति वै यतः। ततस्स वासुदेवेति विद्वद्भिः परिपठ्यते' इति। **जगत्यामिति**—लोकान्तराणामुपलक्षणम्। **जगत्**—स्वरूपतो धर्मतो वा अन्यथात्वं गच्छत् भोग्यभोक्तृरूपं वस्तुजातम्।अतदात्मकं किञ्चिदपि नास्तीति द्रढयितु—**यत्किञ्चेति** विशेष्यते। ' इन्द्रियाणि मनो बुद्धिस्सत्त्वं तेजो बलं धृतिः।वासुदेवात्मकान्याहुः क्षेत्रं क्षेत्रज्ञमेव च'इत्युपबृंहितम्। ननु ' रूढिर्योगमपहरति ' इति न्यायादीशोऽत्र रुद्रस्स्यात्, सर्वाद्युपपदाभावाच्च । मैवं, कारणविषयाकाशप्राणादिशब्दवद्रूढेरिह बाधितत्वात्, ' एको हवै नारायण आसीन्न ब्रह्मा नेशानः' 'अनपहतपाप्माहमस्मि नामानि मे धेहि ' इत्यादिभिः असर्वकारणत्वेन कर्मवश्यत्वेन च सम्प्रतिपन्ने रुद्रे स-

---

कृ॥न्तरं 'पतिं विश्वस्यात्मेश्वरम्' इति। तेन **वास्यं**-निवासनीयं, व्याप्यमिति भावः,अनन्याधारत्वात्परस्य ब्रह्मणः। यद्वा सर्वाधारे स्वस्मिन्नेव स्वेन वसनीयं, सर्वं प्रतिष्ठापनीयमित्यर्थः । स्मर्यतेहि 'सर्वत्रासौ समस्तं च वसत्यत्रेति वै यतः । ततस्स वासुदेवेति विद्वद्भिः परिपठ्यते' इति। **जगत्याम्**-उर्व्याम्, इद लोकान्तराणामप्युपलक्षणम् । **जगत्**-अन्यथात्वं गच्छत्। तत्राचिदंशस्य भोग्यत्वाय स्वरूपविकाररूपमन्यथात्वं, चिदंशस्य भोक्तृत्वाय ज्ञानसंकोचविकासादिलक्षणस्वभावविकारेणान्यथात्वमिति भेदोऽनुसन्धेयः । ईशेनाव्याप्तं किंचिदपि नास्तीति दर्शयितुं **यत्किंचेति** जगद्विशेष्यते । जगत्यादिषु लोकेषु यत्किंच भोक्तृभोग्यरूपं जगद्वर्तते, तदिदं सर्वम्, ईशा वासुदेवेन, वास्यं-व्याप्य धार्यंचेत्यर्थः । 'इन्द्रियाणि मनो बुद्धिस्सत्त्वं तेजो बलं धृतिः । वासुदेवात्मकान्याहुः क्षेत्र क्षेत्रज्ञमेवच' इत्याद्युपबृंहणसहस्रमिहानुसन्धेयम् । ' पृथगात्मानं प्रेरितारंच मत्वा ' ' ज्ञाज्ञौ द्वावजावीशनीशौ' छान्दसो ह्रस्वः । ईशानीशावित्यर्थः । ' नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्' इत्यादिषु प्रसिद्धो जीवेश्वरयोरीशेशितव्यादिलक्षणोऽत्यन्तभेदोऽप्यत्र सिद्धः । ननु 'रूढिर्योगमपहरति' इति न्यायादीशोऽत्र रुद्रस्स्यात्; मैवं, 'एको हवै नारायण आसीन्न ब्रह्मा नेशानो नेमे द्यावापृथिवी न नक्षत्राणि नाग्निर्न सूर्यो न चन्द्रमाः स एकाकी न रमेत' इत्यादिषु 'अनपहतपाप्माहमस्मि नामानि मे धेहि' इत्यादिषु च भगवत्कार्यत्वेन कर्मवश्यत्वेन च सम्प्रतिपन्ने रुद्रे सर्वव्यापित्वसर्वाधारत्वादेरन्वयासम्भवेन विरुद्धार्थविषयतयैवेह रूढेर्भग्नत्वात् । एवंच

---

श्री॥वसितुम्-आच्छादयितुं-वस्त्रादिवत् स्वातिशयाधायकतया धारयितुं योग्यं,सर्वेश्वरेण स्वप्रयोजनविनियोजनैकयोग्यपरतन्त्रवस्तुभूतमिति यावत् । ' वस आच्छादने ' इत्यस्य धातोरदादिगणघटकस्य 'ऋहलोर्ण्यत्' ३ ॥ १ ॥ १२४ ॥ इत्यनुशासनेन ऋवर्णान्ताद्धलन्ताच्च धातोर्ण्यत्स्यादित्यर्थकेन कर्मणिण्यत्प्रत्ययान्तोऽयं शब्दः । अत्र वसधात्वर्थभूतमाच्छादनं न तिरोधानप्रयोजकव्यापाररूपमपवारणम्; अपितु स्वातिशयाधायकतया धारणमेव, ' वस्त्रं वस्ते ' इत्यादौ वस्त्रधारणस्यैव बोधात्; ' वसानमेणाजिनमञ्जनद्युति ' ॥ मा ॥ १ ॥ ६ ॥ इत्यादिषु वस्तेर्धारणार्थकतयैव प्रयोगात्; तदर्थपरस्याच्छादनशब्दस्यापीह ' शाटीमाच्छाद्य दुश्छदाम् ' ॥ रा ॥ २ ॥ ३२ ॥ ३२ ॥ ' आच्छादितायतदिगम्बरम् ' मा ॥ ४ ॥ १९ ॥ ' आच्छाद्य पुष्पपटम् ' ॥ मा ॥ ४ ॥ ५२ ॥ इत्यादिप्रयोगानुरोधेन धारणार्थकत्वाच्च । तथाचात्र वस्त्रादिवद्धार्यत्ववाचिवास्यशब्देन शेषत्वगर्भितं पारतन्त्र्य जगतः प्रतिपादितं भवति । अतः, **जगत्यां** - यथोक्तलक्षणे चेतनाचेतनात्मके जगति, **यत्किञ्च**- यत्किञ्चित्, **जगत्** - स्वभोगोपयोग्याकारेण परिणामं गच्छद्वस्तु । इदञ्च द्वितीयान्तं 'भुञ्जीथाः ' इत्यस्य कर्म । यद्वा, ' ईशा वास्यमिदं सर्वम् ' इत्येतदेव तत्कर्म; ' ईशावास्यम् '

**वे॥**र्वावास्यत्वसर्वाधारत्वादेरसम्भवात् । तद्वत्तया प्रसिद्धे अनवच्छिन्नैश्वर्ये सर्वेश्वरे यौगिकोऽयं शब्दः प्रत्येतव्यः । यद्यपि प्रसिद्धवन्निर्देशाभावादाकाशादिवाक्यवैषम्यम्, तथाप्यैन्द्रीन्यायाद्विरुद्धार्थविषयतयैव रूढिभङ्गोपपत्तिः । नचात्र सर्वत्वमाधिकारिकमिति न्यायः, सङ्कोचादृष्टेः । प्रवाहेश्वरानेकेश्वरपक्षौ तु त्रैकालिकसर्वनिर्वाहकेश्वरप्रतिष्ठापकैः प्रमाणगणैः प्रत्यूढौ । अतः 'पतिं विश्वस्यात्मेश्वरम्' इत्यादिप्रसिद्धानन्याधीनैश्वर्यः 'योऽसावसौ पुरुषः' इत्यनुवदिष्यमाणं ब्रह्मेशानजनकतया अनन्यथासिद्धवाक्यनिर्धारितम् 'एष सर्वभूतान्तरात्मा अपहतपाप्मा दिव्यो देव एको नारायणः' इत्यादिषु सर्वान्तर्यामित्वेन प्रख्यातम् । तत एव 'स ब्रह्मा स शिवः' इत्यादिविभूतिभूताना ब्रह्मशिवेन्द्रादीनां 'विश्वमेवेदं पुरुषः' इत्यत्र विश्वस्यैव विशेष्यतयोक्त नारायणमेव सर्वस्य वास्यमीशं वक्तुमुचितमेतद्वाक्यमित्यलमन्यरूढिप्रसङ्गरहितासमस्तपदाध्ययनानभिज्ञाश्रोत्रियचोद्योपालम्भेन । एवं मुमुक्षोरीश्वरपारतन्त्र्यबोधमुत्पाद्य वैराग्यभूषितां वृत्तिमुपदिशति—**तेन त्यक्तेन भुञ्जीथा मा गृधः कस्यस्विद्धनमिति** । **तेन** जगता भोग्यताभ्रमविषयेण, **त्यक्तेन** दोषभूयस्त्वदर्शनात्परित्यक्तेन, उपलक्षितस्सन् भुञ्जीथाः । अप्रतिषिद्धप्रयोगधर्मोपयुक्तदेहधारणमात्रौपयिकं भोग्यवर्गमित्यर्थप्रकरणाभ्या सिध्यति । यद्वा सर्वावास्यत्वेन प्रकृतं निरतिशयभोग्य वक्ष्यमाणोपायमुखेन 'भुञ्जीथाः' इति योज्यम्। कस्यापि बन्धोरबन्धोर्वा धनं, **मा गृधः** - माभिकाङ्क्षः। आह च यमः किङ्करं प्रति 'परमसुहृदि' इत्यारभ्य'शठ-

---

**कू॥**जगत्कारणवादिवाक्यगताकाशप्राणादिशब्दन्यायेन 'अजस्सर्वेश्वरस्सिद्धः' इत्यनवच्छिन्नैश्वर्यतया प्रसिद्धे सर्वेश्वरे यौगिक एवायमीट्छब्दः प्रत्येतव्य इति सिद्धम् । एवं मुमुक्षोरीश्वरपारतन्त्र्यबोधमुत्पाद्य वैराग्यभूषिता वृत्तिमुपदिशति—**तेन त्यक्तेन भुञ्जीथाः**—तेन जगता भोग्यताभ्रमविषयेणेति भावः। **त्यक्तेन** अल्पास्थिरत्वदुःखमूलत्वदुःखमिश्रत्वदुःखोदर्कत्वदेहात्माभिमानमूलत्वस्वाभाविकब्रह्मानुभवविरुद्धत्वरूपा ये विषयदोषास्सन्, तन्निरूपणपूर्वकं परित्यक्तेन उपलक्षितस्सन् भुञ्जीथाः - भगवदुपासनोपयुक्तदेहस्य धारणमात्रौपयिकमन्नपानादिकं यागदानहोमार्चनाद्युपयोगिपरिजनपरिच्छदादिकं च भोग्यवर्गं भुञ्जीथा इत्यर्थः । यद्वा दोषसतकनिरूपणात् त्यक्तेन भोग्याभासेनोपलक्षितस्सन् भुञ्जीथाः, सर्वावास्यत्वेन प्रकरणे प्राप्तं प्रकृतमुक्तदोषप्रतिभट निरतिशयभोग्य वक्ष्यमाणोपायमुखेन भुञ्जीथाः' इति योज्यम् । अत्र च 'भोक्ता भोग्यं प्रेरितारं च मत्वा' 'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते। तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति' 'समाने वृक्षे पुरुषो निमग्नो अनीशया शोचति मुह्यमानः । जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः' । - महिमानम् इति - प्राप्नोतीत्यर्थः । छान्दसो गुणाभावः । तदेति प्रतिनिर्देशोऽध्याहार्यः । यदाऽन्यमीशमस्य महिमानं च पश्यति, तदा वीतशोको भवतीत्यन्वयो वा । **मागृधः कस्यस्विद्धनं**—कस्यस्वित् क-

---

**श्री॥**इति हेतुगर्भविशेषणम्। जगत्या यत्किञ्च जगदस्ति; ईशावास्यमिदं सर्वं भुञ्जीथा इत्यन्वयः। **त्यक्तेन**-फलममताकर्तृत्वविषयत्रिविधत्यागलक्षणबुद्धिविशेषसंस्कृतेन-**तेन** - तद्वस्तुना, स्वस्वामिभावसम्बन्धेनोपलक्षितः त्वम् 'इत्थं भूतलक्षणे' ॥ २॥ ३ ॥ २१ ॥ इत्यनुशासनेनात्र तृतीया । **भुञ्जीथाः** भुङ्क्ष्व, 'भुज-पालनाभ्यवहारयोः' इति धातो रुधादिगणघटकाद्विधिलिङ् । **कस्य स्वित्** स्वभिन्नस्य यस्य कस्य चित्प्रत्यगात्मनस्स्वस्वामिभावेन सम्बन्धि, **धनम्**—किमपि वस्तु, **मा गृधः** मा साभिकाङ्क्षः, 'गृधु-अभिकाङ्क्षायाम्' इति धातोर्दैवादिकात्कर्तरि लुङ् । 'न माङ्योगे' ॥ ६ ॥ ४ ॥ ७४ ॥ इत्यनुशासनेनाट्प्रतिषेधः--इति ॥ १३ ॥

अयं भावः—जगदन्तर्गतस्य चेतनाचेतनात्मकस्य कृत्स्नस्य वस्तुनो भगवच्छेषतैकरसपरतन्त्रवस्तुतया भगवद्भोगैकफलकत्वात्तदनन्तर्गतस्य स्वातन्त्र्येण स्वभोगस्य संसारबन्धहेतुत्वान्यथाज्ञानका-

वे॥मतिरुपयाति यो ऽर्थतृष्णां पुरुषपशुर्न स वासुदेवभक्तः' इति। इदं च धनाशाप्रहाणं परमात्मेतरकृत्स्नविषयवैराग्योपलक्षणम् । स्मर्यते हि 'परमात्मनि यो रक्तो विरक्तोऽपरमात्मनि' इति ॥ १ ॥

---

कू॥स्यापि बन्धोरबन्धोर्वा धनं मा गृधः - माऽभिकाङ्क्षः; 'गृधु अभिकाङ्क्षायाम्' इति धातुः। आह च यमः किङ्करं प्रति 'हरति परधनं निहन्ति जन्तून्वदति तथाऽनृतनिष्ठुराणि यश्च । न सहति परसम्पदं विनिन्दा कलुषमतिः कुरुते सतामसाधुः ॥ परमसुहृदि बान्धवे कलत्रे सुततनयापितृमातृभृत्यवर्गे । शठमतिरुपयाति योऽर्थतृष्णां पुरुषपशुर्न स वासुदेवभक्तः' इति । भगवद्गीतासु च 'न काङ्क्षे विजयं कृष्ण' इत्यादि । इदञ्च धनाशाप्रहाणं परमात्मव्यतिरिक्तकृत्स्नविषयवैराग्योपलक्षणम् । स्मरन्ति हि 'परमात्मनि यो रक्तो विरक्तोऽपरमात्मनि' इति ॥ १ ॥

---

श्री॥यत्त्वाञ्च, यत्किञ्चिद्वस्तु भुङ्क्ते, तत्सर्वं, भगवानेव स्वशेषभूतेन मया स्वकीयैरेव देहेन्द्रियान्तःकरणैस्स्वकीयेनैव कर्मणा स्वकीयैरेव द्रव्यैस्स्वात्मानं स्वयमेव प्रीतं कारयतीत्यनुसन्धानेन तत्तत्कर्मकर्तृत्वफलममताविषयत्रिविधत्यागपर्यवसन्नबुद्धिविशेषलक्षणसंस्काररूपेण संस्कृत्य भगवद्भोगान्तर्गतस्वभोगस्सन्नेव भुङ्क्ष्व ; तत्रापि लोकन्यायसिद्धस्वस्वामिभावसम्बन्धेन स्वसम्बन्ध्येव वस्तु तथा भुङ्क्ष्व ; न तूक्तसम्बन्धे नान्यसम्बन्धि वस्तु, तथा सति रागद्वेषादिमूलसर्वसांसारिकबन्धप्रसङ्गस्य दुर्वारत्वात्—इति ॥ १४ ॥

अत्र यत्किञ्चिदपि वस्तु, त्यक्तेन तेन स्वामित्वसम्बन्धेनोपलक्षितस्त्वं भुञ्जीथा इत्यनेन, इत्थं भूत लक्षणतृतीयाबलात् स्वामित्वसम्बन्धेन व्यावर्तकलक्षणतया दर्शितत्रिविधत्यागलक्षणबुद्धिविशेषसंस्कृततत्तद्वस्तुविशिष्टस्सन्नेव तत्तद्वस्तु भुङ्क्षेत्यर्थलाभेन तादृशबुद्धिविशेषरहितेभ्यः परमपुरुषार्थलक्षणमोक्षेतरफलार्थिभ्यस्तत्तद्वस्त्वस्वामिभ्यश्च परमपुरुषार्थनिष्ठस्य व्यावृत्तिर्विवक्षिता भवति॥१५॥ सर्वस्यापि कर्मणस्स्वेष्टभूतयत्किञ्चिद्भोगार्थतयैव क्रियमाणत्वेन भोगस्येदृशत्रिविधत्यागगर्भत्वावश्यकताविधानेन सर्वस्य कर्मणस्तदावश्यकत्वं विहितं भवति ॥ १६ ॥ परविद्याङ्गभूतकर्मानुष्ठानाङ्गतया मुमुक्षूणामवश्यापेक्षितो दर्शितबुद्धिविशेषलक्षणस्त्यागो भगवताऽप्यसकृदभिहितो गीताशास्त्रे 'मयि सर्वाणि कर्माणि सन्न्यस्याध्यात्मचेतसा' ॥ ३ ॥ ३० ॥ इति तृतीयाध्याये, 'त्यागो हि पुरुषव्याघ्र त्रिविधस्संप्रकीर्तितः' ॥ १८ ॥ ४ ॥ इत्यष्टादशाध्याये । एवं स्थलान्तरेषु च ॥ १७ ॥ त्यागस्य त्रैविध्यमपि स्पष्टीकृतं तद्भाष्ये भाष्यकारैः 'फलं मम न स्यादिति फलत्यागः, मदीयफलसाधनतया मदीयमिदं कर्मेति कर्मणि ममतायाः परित्यागः कर्मविषयस्त्यागः, सर्वेश्वरे कर्तृत्वानुसन्धानेनात्मनः कर्तृतात्यागः कर्तृताविषयस्त्यागः' इति भाषमाणैः ॥ १८ ॥ त्रिविधत्यागलक्षणानुसन्धानप्रकारश्च, भरद्वाजसंहिताशिरसि न्यासोपदेशे प्रथमाध्याये 'निक्षिप्यात्मानमात्मीयमशेषमखिलात्मनि । क्रियाश्च सकलास्तत्र वर्तन्ते वीतकल्मषाः ॥ ६९ ॥ मन्यन्ते च स्वकीयान्नस्स्वप्रीत्यै स्वोचितां स्वयम् । नाथस्स्वकीयसेवान्तां वृत्तिं कारयतीति वै' ॥ ७० ॥ इति वचनाभ्यां विस्तरेण । तत्रैव परिशिष्टे प्रथमाध्याये - 'परमात्मा हरिस्स्वामी स्वतोऽहं तस्य किङ्करः । कैङ्कर्यमखिला वृत्तिरित्येष ज्ञानसङ्ग्रहः' ॥ ७७ ॥ इति वचनेन सङ्ग्रहेण च दर्शितः ॥ १९ ॥ एतत्संहितोक्तरीत्यनुसारेणैव च भाष्यकारैरपि गीताभाष्ये तृतीयाध्यायत्रिंशश्लोकव्याख्यायां 'स्वकीयेनात्मना कर्त्रा स्वकीयैश्चोपकरणैस्स्वाराधनैकप्रयोजनाय परमपुरुषस्सर्वेश्वरस्सर्वशेषी स्वयमेव स्वकर्माणि कारयतीत्यनुसन्धाय' इत्यनेन । अष्टादशाध्याये - त्रयोदशश्लोकावतारिकायां 'परमपुरुषो हि स्वकीयेन जीवात्मना स्वकीयैश्च करणकलेबरप्राणैः स्वलीलाप्रयोजनाय कर्माण्यारभते' इत्यनेन। एवं नित्यग्रन्थे प्रथमतः 'भगवानेव स्वशेषभूतेन मया स्वकीयैरेव कल्याणतमैरौपचारिकसांस्पर्शिकाभ्यवहारिकैर्भोगैरखिलपरिजनपरिच्छ-

श्री॥दान्वितं स्वात्मानं प्रीतं कारयितुमुपक्रमत इत्यनुसन्धाय' इत्यनेन ; मध्ये 'भगवानेव स्वनियाम्यस्वरूपस्थितिप्रवृत्तिस्वशेषतैकरसेनानेनात्मना स्वकीयैश्च देहेन्द्रियान्तःकरणैस्स्वकीयकल्याणतमद्रव्यमयानौपचारिकसार्स्पशिकाभ्यवहारिकादिसमस्तभोगानतिप्रभूतानतिसमग्रानतिप्रियतमानत्यन्तभक्तिकृतानखिलपरिजनपरिच्छदान्विताय स्वस्मै स्वप्रीतये स्वयमेव प्रतिपादयितुमुपक्रमत इत्यनुसन्धाय' इत्यनेन; ततः किञ्चिदुपरिष्टात् 'भगवानेव सर्वं कारयतीति पूर्ववद्ध्यात्वा' इत्यनेन; अन्तेच 'भगवानेव' इत्यारभ्य पूर्वोक्तानुपूर्वीकेण 'स्वयमेव प्रतिपादितान्' इत्यन्तेनच निर्देशेन मुमुक्षूणां दर्शितत्रिविधत्यागलक्षणानुसन्धानप्रकारोऽसकृद्दर्शितः ॥ २० ॥ अतएवचास्मत्सैद्धान्तिकाः कर्मसु क्वचित्, 'भगवानेव' इत्याद्युक्तरीत्या विस्तरेण, क्वचित् कैङ्कर्यरूपत्वनिर्देशेन संक्षेपेणच यथोक्तलक्षणं त्रिविधत्यागरूपमनुसन्धानविशेषमनुतिष्ठन्ति ॥ २१ ॥ तथाचात्र मन्त्रे 'ईशावास्यम्' इत्यनेन, परविद्यायां परस्मिन्ननुसन्धेय स्वतन्त्रत्वनियन्तृत्वशेषित्वस्वामित्वलक्षणमाकारचतुष्टयं, स्वस्मिन्ननुसन्धेयं परतन्त्रत्वनियाम्यत्वशेषत्वस्वत्वलक्षणमाकारचतुष्टयं, 'तेन त्यक्तेन' इत्यनेन परविद्याङ्गकर्मानुष्ठानाङ्गतया कर्तव्यानुसन्धानविशेषस्वरूपञ्च दर्शितं भवति ॥ २२ ॥

यत्पुनरत्र शाङ्करं व्याख्यान 'जगत्यां-पृथिव्युपलक्षितेषु सर्वेषु लोकेषु यत्किञ्च जगत् द्वैतरूपं नामरूपकर्माख्यं विकारजातम्, अस्ति, इदं सर्वम् अनृतरूपम्, ईशा सुज्ञातेन सत्यरूपेण स्वेनात्मना, वास्यम्-आच्छादनीयम्, व्यपोहनीयमिति यावत्, 'वस-आच्छादने' इतिधातोराच्छादनार्थकत्वादाच्छादनस्य व्यपोहनपर्यवसन्नत्वात् ; यथा चन्दनागर्वादेरुदकादिसंबन्धजक्लेदादिज दौर्गन्ध्यं तत्स्वरूपनिघर्षेणेनाच्छाद्यते स्वेन पारमार्थिकेन गन्धेन, तद्वदेवेति भावः । इत्थञ्च नामरूपकर्माख्यमनृतं सर्वं विकारजातं परमार्थसत्यात्मभावनया त्यक्तं स्यात् । पुत्राद्येषणात्रयसन्यासलक्षणत्यागस्सिद्ध्यतीति यावत् । ततश्च कर्मसंन्यास एवाधिकारः, न तु कर्मसु । तेन त्यक्तेन - तत्त्यागेनेत्यर्थः, आत्मानं, भुञ्जीथाः-पालयेथाः, त्यागेन यथोक्तलक्षणेनात्मानं संसारनिवृत्त्या सुरक्षितं कुर्वीथाः, मुक्तो भवसीति यावत्। एवं त्यक्तैषणस्त्वं, कस्यस्विद्धनं मा गृधः-स्वस्य परस्य वा कस्यापि धन मा काङ्क्षीरित्यर्थः। अथवा, कस्यस्विद्धनं - कस्य किमस्ति धनं - सर्वस्य द्वैतप्रपञ्चस्य मिथ्यात्वात्; अतः, मा गृधः - मा काङ्क्षां कार्षीः,—इति ॥ २३ ॥ तदेतत्सर्वं यथावस्थितशब्दार्थव्युत्पत्त्यनवधारणमूलमक्षराननुगुण स्वमताभिनिवेशबलात्कारकारितस्वैराध्याहारपूरणादिना स्वपरिगृहीतविपरीतार्थपरताप्रसह्यारोपणमात्ररूपञ्चेति विमत्सरं विचारप्रवृत्तानां विदुषां सुगमम् ॥ २४ ॥ तथाहि 'वस आच्छादने' इति धात्वर्थभूताच्छादनस्य स्वातिशयाधायकतया धारणरूपतायाः प्रागावेदितत्वेन तिरोधानहेतुव्यापाररूपापवारणानात्मकतया व्यपोहनपर्यवसन्नत्वाभावात्, वास्यमित्यस्य व्यपोहनीयमित्यर्थपर्यवसानमाश्रित्य द्वैतप्रपञ्चनिवृत्तिपरत्ववर्णनं शब्दार्थाव्युत्पत्तिमूलमेव ॥ २५ ॥ एव—'भुञ्जीथाः' इत्यस्य पालयेथा इत्यर्थवर्णनमपि शब्दार्थाव्युत्पत्तिमूलमेव; 'भुजोऽनवने'॥१॥३॥६६॥ इत्यनुशासनेन पालनभिन्नार्थकस्यैव भुजेरात्मनेपदं भवति, नतु पालनार्थकस्येत्यर्थकेन, आत्मनेपदिनो भुजेः पालनार्थकत्वाभावस्यैव प्रतिपन्नत्वात् ॥ २६ ॥ अतएवहि 'ओदनं भुङ्क्ते' इत्यादिप्रयोगेषु पालनभिन्नार्थकस्य भुजेरात्मनेपदम् ; 'पृथिवीं भुनक्ति' इत्यादिप्रयोगेषु पालनार्थकस्य भुजेः परस्मैपदञ्च नियतं दृश्यते ॥ २७॥ एवम्, ईशेत्यस्य विशेषणतया सत्यरूपेण सुज्ञातेनेति पूरणस्य 'भुञ्जीथाः' इत्यस्यात्मानमिति कर्मपूरणस्य सर्वमिदमित्यस्यानृतमिति विशेषणपूरणस्य च कल्पनम्, ईशेत्यस्य स्वात्मस्वरूपेणेत्यर्थवर्णनच स्वमताभिनिवेशकारितस्वैरितामात्रमित्यनुपादेयमेव शब्दस्वरसविदां विदुषाम् ; प्रकरणसन्दर्भादिबलनिर्भा-

श्री॥सितयांरेव पूरणार्थपर्यवसानयोः करणस्य न्याय्यत्वादतथाविधयोस्तयोस्स्वैर करणस्यायुक्तत्वात्, अन्यथातिप्रसङ्गस्य दुर्वारत्वात् प्रकृतस्थले दर्शितपूरणार्थपर्यवसानाकरणे क्षतिलेशस्याप्यनुपलम्भाच्च॥२८॥ अपि च, ईशेतीश्वरत्वेन निर्दिष्टमात्मानं सत्यरूपत्वेन विशेष्य, तेन सुज्ञातेन द्वैतप्रपञ्चनिराकरणपरत्ववर्णनमपि श्रुतेर्न सङ्घाघटीति, ईश्वरस्येशितव्यद्वैतप्रपञ्चसापेक्षत्वेन तस्य सत्यरूपत्वे द्वैतप्रपञ्चस्यापि सत्यतासिद्ध्या तेन सुज्ञातेन द्वैतप्रपञ्चनिराकरणायोगात् ॥ २९ ॥ उक्तानुपपत्तिपरिहाराय - 'ईशा' इत्यस्य स्वात्मस्वरूपेणेत्यर्थस्स्वीक्रियत इत्यपि न सुवचम्, ईश्वरत्वविशिष्टवाचकस्य तस्य केवलस्वात्मस्वरूपमात्रवाचकताया विना लक्षणामसम्भवात् ॥ ३० ॥ किं बहुना, आत्मस्वरूपेण सुज्ञातेन द्वैतप्रपञ्चनिराकरणं यदीह विवक्षितमभविष्यत्, तदाऽऽत्मस्वरूपपरनिर्देशमुपेक्ष्य, ईश्वरत्वाविशिष्टपरः 'ईशा' इति निर्देश एव नाकरिष्यतेति तु तत्त्वमवधेयम्॥ ३१ ॥ एव 'तेन त्यक्तेन भुञ्जीथाः' इत्यस्य स्वरूपतस्सर्वकर्मसन्यासलक्षणत्यागपरत्वे, 'मा गृधः कस्यस्विद्धनम्' इति पुनर्धनग्रहणकाङ्क्षाप्रतिषेधः पिष्टपेषणरूपः पौनरुक्त्यदोषादसमञ्जसः, सर्वत्यागे विधीयमाने धनग्रहणमात्रस्य पुनः प्रसङ्गलेशाभावाच्च ॥ ३२ ॥ अपिच, शङ्कराभिमतरीत्या स्वरूपतस्सर्वकर्मसंन्यासलक्षणत्यागस्यैव मुमुक्षोरावश्यकतयैतन्मन्त्रप्रतिपाद्यत्वे 'कुर्वन्नेवेह कर्माणि' इति द्वितीयमन्त्रे पुनः कर्मानुष्ठानविधानमत्यन्तासमञ्जसम् ॥ ३३ ॥ द्वितीयमन्त्रो बुभुक्षुविषय इति वर्णनमप्यविवेकविलसितमेव, बुभुक्षूणामपेक्षितकर्मानुष्ठानप्रक्रियां निरवशेषं निरूप्य समापनानन्तरम्मुमुक्ष्वपेक्षितानुष्ठानप्रक्रियाप्रतिपादनैदंपर्यप्रवृत्ते ज्ञानकाण्डरूपेऽस्मिन् चरमेऽध्याये पुनर्बुभुक्षोरनुष्ठानप्रक्रियावर्णनस्य सङ्गतिलेशाभावात् ॥ ३४ ॥ तस्मात्सर्वमिदं शाङ्करं व्याख्यानं बलाच्छ्रुतेस्स्वाभिमानपरिगृहीतार्थपरतया योजनमात्ररूपं शिरस्त्रानुगुण्येन शिरःकर्तनन्यायमेवानुसरीसरीतीति निर्मत्सरास्तत्त्वबुभुत्सवो विद्वांसो विदाङ्कुर्वन्तु ॥ ३५ ॥

यदपि, शङ्करमतानुयायिना वाजसनेयिसंहिताव्याख्यात्रा महीधरेण शाङ्करव्याख्याने क्वचिदंशे किञ्चिदस्वारस्यं मन्वानेन 'यत्किञ्च जगत्यां जगत् तेन त्यक्तेन भुञ्जीथाः' इत्यंशस्य 'यत्किञ्चेति भिन्नक्रमं, किञ्च यत् जगत्यां लोकत्रये, जगत् - जङ्गमादिकं, स्वामिसम्बन्धालिङ्गितं भवेत्, तेन सर्वेण, त्यक्तेन त्यक्तस्वस्वामिसम्बन्धेन. भुञ्जीथाः - भोगमनुभवेः' इति व्याख्यानं कृतम् ॥ ३६ ॥ तदप्यसत्, स्वामिसम्बन्धालिङ्गितं भवेदिति स्वैरपूरणात्, 'भुञ्जीथाः' इत्यस्य भोगमनुभवेरित्यर्थकरणस्योदक्षरत्वाच्च ॥ ३७ ॥ 'भुञ्जीथाः' इत्यत्र भोगमात्रस्य लाभेन तदनुभवो हि न केनापि लभ्यते ॥ ३८ ॥ किञ्च भुजेस्सकर्मकत्वेन कर्मसापेक्षतया कर्मतया तदन्वययोग्यस्य 'तेन त्यक्तेन' इत्यस्य करणतयाऽन्वयो न घटते; अन्यथा, 'अन्नं भुञ्जीथाः' इति स्थाने 'अन्नेन भुञ्जीथाः' इत्यपि प्रयोगापत्तेः ॥ ३९ ॥ एवम् - 'ईशावास्यमिदं सर्वम्' इत्यंशस्य शङ्करवदेव स्वयमपि परमार्थसत्यरूपस्वात्मस्वरूपयाथात्म्यानुसन्धानेनानृतरूपकृत्स्नद्वैतप्रपञ्चनिराकरणविधिपरतां व्याख्याय, पश्चात्किञ्चेत्यादिना ममताबुद्ध्यनास्पदीकृतजङ्गमादिभोगोपकरणेन भोगानुभवविधिपरतया, यत्किञ्चेत्याद्यंशस्य व्याख्यान ह्यसमञ्जसं, द्वैतप्रपञ्चनिराकरणस्य जङ्गमादिवस्तुकरणकभोगानुभवस्यच द्वयोरेकं प्रति विधानासम्भवात् ॥ ४० ॥ किञ्च, 'मा गृधः कस्यस्विद्धनम्' इत्यस्य 'क्वापि धने कस्यापि स्वत्वं वस्तुतो नास्ति ; अतस्स्वीयत्वेन परकीयत्वेन वा लोकसिद्धे सर्वस्मिन्नपि वस्तुनि ममताबुद्धिं मा कृथाः' इति व्याख्यानात्, पूर्वांशस्य 'ममतालिङ्गिते वस्तुनि सर्वत्र ममताबुद्धिं प्रहाय तेन भोगमनुभवेः' इति व्याख्यानाच्च, सर्वत्रैव ममता बुद्धिं प्रहाय तेनैव भोगानुभवप्रसङ्गेन विपरीतो महाननर्थोऽपि प्रसज्यते; परकीयेषु वस्तुषु स्वेन ममताबुद्धिप्रहाणेऽपि परेषां तत्र तद्बुद्धिसत्त्वेन तत्कृतोपरोधादिर्मूलसवदुःखस्य, तथाविधोपरोधाद्यसत्त्वे च स्वैरं परदारपरद्रव्यापहारादिशास्त्रप्रतिषि-

श्री॥द्वाकृत्यकरणेऽपि दोषाभावप्रसङ्गस्य चापातात्॥४१॥इतरांशस्य शङ्करदेवानेनापि व्याख्यानात्त-द्याख्याने प्रागुक्ता दोषास्सर्वेऽप्येतद्याख्यानेऽपि तदवस्थाः॥४२॥ अत एतद्याख्यानमप्यसमञ्जसमेव ॥

एतेन, 'ईशावास्यम्' इति समस्तपदमाश्रित्य, 'ईशेन रुद्रेण, आवास्यं व्याप्यम्' इ-ति व्याकृत्य, 'रूढिर्योगमपहरति' इति न्यायेन योगाद्रूढेर्बलिष्ठतया रुद्रपरत्वमीशपदस्याश्रित्य रुद्र-स्यैवैतन्मन्त्रप्रतिपाद्यत्वमेतदुपनिषत्प्रतिपाद्यविद्यावेद्यत्वञ्च मन्यमाना अपि निरस्ताः; अध्येतृपाठस-म्प्रदायविरोधेनात्र समस्तपदस्वीकारासम्भवात्, तृतीयान्तस्य क्विबन्तेशधातुनिष्पन्नेशच्छब्दस्य यौगि-कस्यैवात्र पदविभागानुसन्धाय्यध्येतृपाठसम्प्रदायसिद्धतया तस्य योगमात्रेणैश्वर्यविशिष्टवाचकस्य रुद्रे रूढिप्रसङ्गस्यैवाभावात्; तदानीं 'वस - निवासे' इति निवासार्थकवसधातोः 'गृहे वसति' इत्या-दिप्रयोगवशेनाकर्मकताया एव सिद्धतया 'लः कर्मणिच भावेचाकर्मकेभ्यः' ॥ ३ ॥ ४ ॥ ६९ ॥ इत्यनुशासनेनाकर्मकेभ्यो धातुभ्यो भावकर्त्रोरेव लकारविधानेन 'तयोरेव कृत्यक्तखलर्थाः' ॥ ३ ॥ ४ ॥ ७० ॥ इत्यनुशासनेन लकारादेशभूतकृत्यप्रत्ययानां भावकर्मणोरेव विधानेन च तस्माद्धातोः कर्मणि कृत्यप्रत्ययान्तर्गतण्यत्प्रत्ययासम्भवेन भावार्थे तत्सम्भवेऽपि तस्येहानुपकारकत्वेन च वास्यमि-त्यस्यात्र व्याप्यार्थकताया एवासम्भवाच्च ॥४४॥ यद्यपि, 'आवास्यम्' इति पदच्छेदमाश्रित्य वसतेराङ्-पूर्वकत्वाश्रयणे 'उपान्वध्याङ्वसः' ॥ १ ॥ ४ ॥ ४८ ॥ इत्यनुशासनेनाङ्पूर्वकस्य तस्याधारकर्मकतया सकर्मकत्वसम्भवेन तदुपरिकर्मणि ण्यत्प्रत्ययसम्भवेन च, 'आवास्यम्' इत्यस्य व्याप्यार्थकत्वमपि कथ-ञ्चित्सुवचम् ॥ ४५ ॥ तथापि 'वास्यम्' इत्येव पदविभागस्याध्येतृपाठसंप्रदायसिद्धतया तत्राङ्प्र-श्लेषकल्पनाऽपि न सम्भवति, पाठसम्प्रदायोल्लङ्घने वेदप्रामाण्यस्यैव दुर्लभत्वप्रसङ्गात्, अ-विच्छिन्नशिष्टपाठसम्प्रदायस्यैव वेदप्रामाण्यबीजतायास्सर्वसम्प्रतिपन्नत्वाच्च ॥ ४६ ॥ अस्तुवा समस्त-पदपाठसम्भावनाऽपि क्वचित् ॥ ४७ ॥ तथाऽपि, का नः क्षतिः? सर्वपरविद्यानां 'यतो वा इ-मानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्ति । तद्विजिज्ञासस्व । तद्ब्रह्मेति' तै ॥ भृ ॥ १ ॥ 'कारणं तु ध्येयः'॥ अथर्वशिखोप ॥ इत्यादिशास्त्रैर्निखिलजगत्कारणभूतब्रह्मविषयत्व-स्यैव सिद्धतया रुद्रस्य तथात्वासम्भवेनैवात्रेशशब्दस्य तत्परत्वासम्भवात्, उपपदाभावेनासङ्कोचतोऽ-नवधिकैश्वर्यवत्त्वेन रूपेण योगशक्तिमात्रेण निखिलजगत्कारणभूतनारायणपरताया एव वक्तव्यत्वाच्च ॥ ४८ ॥ यथाहि रूढ्याऽन्यपरतया प्रसिद्धानामाकाशप्राणादिशब्दानां प्रकरणप्रतिपन्नजगत्कारणत्वाद्य-नुपपत्त्या रूढ्यर्थप्रहाणेन योगशक्त्या परब्रह्मपरत्वं स्थापितमाकाशाद्यधिकरणेषु; तथैवेहापि भविष्य-तीति न किञ्चिदवहीनम् ॥ ४९ ॥ जगत्कारणत्वञ्च नारायणसुज्यकोटिप्रविष्टस्य कर्मवश्यस्य रुद्रस्य न सम्भवति, 'एको हवै नारायण आसीन्न ब्रह्मा नेशानः' इति महोपनिषदो, 'नारायणाद्ब्रह्मा जाय-ते । नारायणद्रुद्रो जायते' इति नारायणोपनिषदो 'अनपहतपाप्मा वा अहमस्मि अविहितनामा। नाम मे धेहि पाप्मनोऽपहत्यै' इति शतपथाष्टमूर्तिब्राह्मणश्रुत्यादिभिश्च रुद्रस्य नारायणसृज्यकोटिप्रविष्टतायाः कर्मवश्यताया नारायणस्यैव निखिलजगत्परमकारणतायाश्च प्रतिपन्नत्वात् ॥ ५० ॥ एवम्, 'ईशा-वास्यम्' इत्यत्र विवक्षितसर्वभूतान्तरात्मत्वलक्षणा व्याप्तिरपि तस्य न सम्भवति, 'एष सर्वभूतान्तरा-त्मापहतपाप्मा दिव्यो देव एको नारायणः' सु ॥ ७ ॥ इत्यादिश्रुत्या 'सर्वत्रासौ समस्तञ्च वसत्य-त्रेति वै यतः । ततस्स वासुदेवेति विद्वद्भिः परिपठ्यते' ॥ वि ॥ पु ॥ १ ॥ २ ॥ -१२ ॥ इत्या-दिस्मृत्या च नारायणस्यैकस्यैव तस्याः प्रतिपन्नत्वात् ॥ ५१ ॥ अपि च, अस्यामेवोपनिषद्युत्तरत्र 'पूष-

१. १-१-१ ॥ २ १ खं ॥ ३ शत. ६-३-९ ॥

श्री॥न्नेकर्षे' इति मन्त्रे कल्याणतमाप्राकृतदिव्यरूपविशिष्टादित्यमण्डलान्तर्वर्तिपरमपुरुषविषयत्वस्यात्र विवक्षितपरविद्यायाः प्रतिपन्नत्वात् तादृशपरमपुरुषस्य'य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात्सर्व एव सुवर्णस्तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी तस्योदिति नाम स एष सर्वेभ्यः पाप्मभ्य उदितः' ॥ छा ॥ १ ॥ ६ ॥ ६ ॥ ७ ॥ इति च्छान्दोग्यश्रुत्या पुण्डरीकाक्षत्वापहतपाप्मत्वादिभिर्नारायणरूपतायाः स्फुटीकृतत्वाच्चास्या विद्याया अनपहतपाप्मविरूपाक्षरुद्रविषयता न कथञ्चिदपि संभवतीत्यतोऽप्यत्रत्येशशब्दस्य समस्तपदघटकतासंभावनायामपि प्रकरणविरोधेन रुद्रपरत्वासम्भवान्नारायणपरत्वं दुरपह्नवमेव ॥ ५२ ॥ वस्तुतोऽत्र 'ईशावास्यम्' इत्यस्य व्याप्तिपरत्वस्वीकारोऽपि नोचितः, उत्तरवाक्यार्थानुपकारकत्वात् ॥ ५३ ॥ तस्माद्यथोक्तरीत्यैव व्याख्यानमिहोचितम् ॥ ५४ ॥ अत एव 'स्तुतयेऽनुमतिर्वा'॥ ३ ॥ ४ ॥ १४ ॥ इति सूत्रश्रुतप्रकाशिकायाम् 'ईशावास्यम्'इति - ईट्छब्दस्तृतीयान्तः, ईशा-तेन, वास्यं, यद्वा, ईशेन आवास्यम्, ईश्वरपरतन्त्रमित्यर्थः' इति व्यासार्यैरपि व्याख्यानं कृतम् ॥ ५५ ॥ अत्यन्तपारतन्त्र्यस्य स्वैरविनियोगयोग्यत्वरूपत्वेन स्वातिशयाधायकतयाऽपि विनियोगप्रयोजकत्वसम्भवाच्छेषत्वगर्भितत्वसम्भवेन, परतन्त्रशब्देन शेषत्वगर्भितमत्यन्तपारतन्त्र्यमेवेह विवक्षितम्, प्रागुक्तरीत्या तस्यैव त्यागगर्भितभोगरूपवक्ष्यमाणवाक्यार्थोपकारकत्वात् ॥ ५६ ॥ अत एव च, त्यागशब्दार्थानुसन्धानविशेषस्वरूपं प्रदर्शयद्भिर्भाष्यकारैः 'स्वनियाम्यस्वरूपस्थितिप्रवृत्तिस्वशेषतैकरसेनानेनात्मना' इति तादृशानुसन्धानस्य शेषत्वपारतन्त्र्योभयगर्भितत्वं दर्शितम् ॥ ५७ ॥ वास्यशब्दस्य प्रागुक्तरीत्या 'वस - आच्छादने' इति धातुनिष्पन्नत्वाभिप्रायेणैव परतन्त्रपरता दर्शितश्रुतप्रकाशिकाभिप्रेता; वस्त्रादिवत्स्वेष्टानुगुण्येन धार्यत्वार्थकत्वे सत्येवात्यन्तपारतन्त्र्यलाभात्, 'वस-निवासे' इति धातोरकर्मकत्वेन तदुपरि कर्मणि ण्यत्प्रत्ययासम्भवादिदोषस्य प्रागेवोक्तत्वाच्च ॥ ५८ ॥ यद्वा 'वस-निवासे' इति धातोरपि ण्यन्तात्कर्मणिण्यत्प्रत्ययाश्रयणसम्भवेन, वासयितुं - स्वेष्टानुगुण्येन स्थापयितुं - योग्यं वास्यमिति व्युत्पत्त्याऽपि वास्यशब्दस्य यथोक्तार्थ एव पर्यवसानं सम्भवतीत्यपि सुवचम् ॥ ५९ ॥ अत्र, ईशेनावास्यमिति समस्तपदाभिप्रायेण व्याख्यानमपि संहितास्थमन्त्राणामपि केषाञ्चिच्छाखास्वपि पाठदर्शनेन तत्र पदविभागाध्ययनस्य पाठसंप्रदायासिद्धतया तत्र प्रकारान्तरेण योजनानामपि दर्शनात्, तद्वदस्यापि मन्त्रस्य क्वचित् पाठसम्भावनायामपि यथोक्तार्थपर एवायम्मन्त्र इत्यभिप्रायेणैव कृतम्;न तु तथाविधं पाठं क्वचिद्दृष्ट्वा तदनुरोधेन कृतम् - तथाविधपाठस्य क्वाप्यनुपलम्भादिति बोध्यम् ॥ ६० ॥

एतेन 'सर्वमिदं-तत्तत्प्रमाणसिद्धं सर्वं चिदचिदात्मकं वस्तु, ईशा सर्वनियन्त्रा पुरुषोत्तमेन, वास्यं - व्याप्यमित्यर्थः, सर्वाधारे स्वस्मिन् स्वेन वासनीयं वा' इति, 'जगत्यां-सर्वस्मिन्नपि लोके, यत्किञ्च-यत्किञ्चिदस्ति, इदं सर्वमिति पूर्वेण सम्बन्धः' इति 'भुञ्जीथाः' इत्यत्र-अप्रतिषिद्धयोगधर्मोपयुक्तदेहधारणमात्रौपयिकभोग्यवर्गमित्यर्थप्रकरणाभ्यां सिध्यति, यद्वा, सर्वावासत्वेन प्रकृतं निरतिशयभोग्यं वक्ष्यमाणोपायमुखेन भुञ्जीथा इति योज्यम्' इति 'तेन जगता भोग्यताभ्रमविषयेण, त्यक्तेन - दोषभूयस्त्वदर्शनात्परित्यक्तेन, उपलक्षितस्सन् भुञ्जीथाः' इति च केषाञ्चिद्व्याख्यानमप्यनुपपन्नमिति सिद्धम्,शब्दस्वभावविरोधात्, पूर्वोत्तरवाक्यार्थसङ्गत्यभावात्, स्वरसाध्याहारपूरणगर्भत्वाच्च ॥ ६१ ॥ निवासार्थकस्य वसतेरकर्मकत्वेन तदुपरिकर्मणि ण्यत्प्रत्ययासम्भवात्तद्धातुनिष्पन्नस्य वास्यमित्यस्य व्याप्यार्थकत्वं हि न सम्भवति ॥ ६२ ॥ ण्यन्तात्तस्मात्कर्मणि ण्यत्प्रत्ययाश्रयणेन सम्पाद्यस्य, सर्वाधारे स्वस्मिन् स्वेन वासयितव्यमित्यर्थस्यापि नात्र विवक्षा युक्ता - उत्तरवाक्यार्थानुपकारकत्वात् ॥ ६३ ॥ व्याप्यार्थकत्वस्य कथञ्चित्संपादनेऽपि तस्याप्ययं दोषस्समानः ॥ ६४ ॥ 'भुञ्जीथाः' इत्यत्र दे-

श्री॥ इधारणमात्रौपयिकान्नपानादिभोग्यवर्गस्य सर्वावासभूतमिरतिशयभोग्यपरमपुरुषस्य वा कर्मणो वाचकशब्दपूरणं, वक्ष्यमाणोपायेनेति करणवाचकपूरणञ्च गुरुतरं स्वैरं कल्प्यमानं न सहृदयहृदयङ्गमम्, क्लिष्टकल्पनामूलत्वेनास्वारसिकत्वात्, गौरवात्, क्लिष्टकल्पनामन्तरेण पूर्वोक्तरीत्या निर्वाहसम्भवाच्च ॥ ६५ ॥ एवं 'तेन त्यक्तेन' इत्यत्र वैराग्यवशेन स्वरूपतस्त्यागस्यैव विवक्षिततया तथा त्यक्तेन तेन वैशिष्ट्यरूपतदुपलक्षितत्वस्य त्यागानन्तरमसिद्ध्या तदुपलक्षितस्सन् भुञ्जीथा इति वाक्यार्थानुपपत्तिः ॥ ६६ ॥ नच यदाकदाचित्सत्संबन्धित्वरूपं तदुपलक्षितत्वमिह विवक्षितुं शक्यम्; 'इत्थं भूतलक्षणे' ॥ २ ॥ ३ ॥ २१ ॥ इत्यनुशाशासनसिद्धतृतीयायास्तत्काले व्यावर्तकधर्मविधया प्रकृत्यर्थरूपलक्षणवैशिष्ट्यरूपोपलक्षितस्यैकपरत्वात्, 'अपि भवान् कमण्डलुना च्छात्रमद्राक्षीत्' इत्यादितदुदाहरणस्थलेषु तत्काले प्रकृत्यर्थरूपलक्षणवैशिष्ट्यरूपलक्षितत्वस्यैवानुभवदर्शनादन्यथा तत्काले दर्शनोपयोगित्वेनापेक्षिताया व्यावृत्तेस्तत्रासिद्धिप्रसङ्गाद्वैशिष्ट्यपरत्वसम्भवे यदाकदाचित्संबन्धित्वपरत्वकल्पनाया अस्वारसिकत्वाच्च ॥ ६७ ॥ तस्माद्यथोक्तरीत्यैव व्याख्यानं स्वीकर्तुं युक्तं प्रामाणिकैः॥६८॥

न चास्मिन् मन्त्रे तत्तद्वस्तुष्वेव त्यागोऽभिहितो दृश्यते, न कर्मसु; तत्कथं वक्ष्यमाणकर्मानुष्ठानाङ्गभूतः कर्मसु त्रिविधत्यागरूपो यथोक्तलक्षणानुसन्धानविशेषोऽनेन मन्त्रेण सिध्यतीति वाच्यं, जीवात्मविशिष्टत्वप्रकारकधीविषयसामान्यविशेष्यकभगवद्विशिष्टत्वप्रकारकनिर्णयस्यैव 'तेन त्यक्तेन' इत्यत्र त्यजिधात्वर्थत्वात्, तादृशनिर्णयप्रयोज्यप्रागुक्तलक्षणानुसन्धानविशेषविषयत्वरूपफलाश्रयत्वरूपकर्मत्वस्यैव तदुत्तरक्तप्रत्ययार्थत्वाच्च; तादृशकर्मत्वाश्रयतत्तद्वस्तुविशिष्टकर्तृकतायां तत्तद्वस्तुकर्मकभोगे विधीयमानाया परम्परया तद्विशेषणभूततादृशनिर्णयेऽपि विधेयत्वसिद्ध्या वक्ष्यमाणकर्मस्वपि यथोक्तलक्षणानुसन्धानविशेषसिद्धेर्निष्प्रत्यूहत्वात् ॥ ६९ ॥ धियो जीवात्मविशिष्टत्वं, स्वभोगसाधनत्वस्वसम्बन्धित्वोभयसम्बन्धेन; भगवद्विशिष्टत्वं, स्वेतरपुरुषव्यापाराप्रयोज्यस्वव्यापारप्रयोज्यस्वभोगसाधनत्वस्वसम्बन्धित्वोभयसम्बन्धेनेति बोध्यम् ॥ ७० ॥ तादृशनिर्णयस्य दर्शितोभयसम्बन्धेन जीवात्मविशिष्टत्वबुद्धित्यागपर्यवसायित्वात्त्यागरूपत्वमित्यवसेयम् ॥ ७१ ॥ स्वेष्टसाधनत्वबुद्धिमन्तरेण कस्मिन्नपि कर्मणि पुरुषस्य प्रवृत्त्यनुदयेन तादृशधीविषयसामान्ये दर्शितनिर्णयसिद्धौ तदधीनदर्शितानुसन्धानविशेषस्सर्वकर्मस्ववर्जनीयः प्राप्नोत्येवेति च बोध्यम् ॥ ७२ ॥ किञ्च, यथा हि 'मयि सर्वाणि कर्माणि सन्न्यस्याध्यात्मचेतसा' इत्यादावभिहितः कर्मसु त्यागः, तत्कर्तृतदुपकरणादिविषयः पर्यवस्यति; तथैवेहाभिहितो वस्तुषु त्यागोऽपि तत्तद्वस्तुतद्विनियोजनकर्मादिविषयः पर्यवस्यतीति न कश्चिद्दोषः॥ ७३ ॥ अत एवहि 'मयि सर्वाणि कर्माणि सन्न्यस्य' इति श्लोकभाष्ये 'स्वकीयेनात्मना कर्त्रा स्वकीयैश्चोपकरणैस्स्वाराधनैकप्रयोजनाय परमपुरुषस्सर्वेश्वरस्सर्वशेषी स्वयमेव स्वकर्माणि कारयति' इति वाक्येन तत्तत्कर्मतत्कर्तृतदुपकरणद्रव्यादिविषयानुसन्धानविशेषरूपमेव कर्मत्यागस्वरूपं विवृतं भाष्यकारैः ॥ ७४ ॥ नहि तत्तद्वस्तुषु परं स्वकीयत्वस्वार्थत्वबुद्धिं प्रहाय तद्विनियोजनादिकर्मसु परं तादृशबुद्धिमनपहायैव तानि स्वोपयोगे विनियुञ्जानास्तद्वस्तुत्यागिनो भवन्ति ॥ ७५ ॥ तस्मात्कर्मत्यागाभिधानस्य कर्मतत्संबन्धिकर्तृद्रव्यादित्यागपरत्ववद्वस्तुत्यागाभिधानस्यापि तत्तद्वस्तुतत्सम्बन्धिकर्मादित्यागपरत्वस्यावर्जनीयतयाऽत्राभिधीयमानो वस्तुत्यागः कर्मत्यागान्नार्थान्तरं भवितुमर्हतीति वक्ष्यमाणे मुमुक्षूपयोगिकर्मानुष्ठानेऽङ्गतयापेक्षितो दर्शितत्रिविधत्यागलक्षणानुसन्धानविशेष एव प्रथममन्त्रे दर्शित इति सिद्धम् ॥ ७६ ॥ इति प्रथममन्त्रव्याख्यानम् ॥ १ ॥

१. गीता. ३-३० ॥

**कुर्वन्नेवेह कर्माणि जिजीविषेच्छतँ समाः ।**
**एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे ॥ २**

---

**वे ॥** एवं विदुषः फलसङ्गकर्तृत्वादित्यागयुक्तं नित्यनैमित्तिकरूपं विद्याङ्गभूतं कर्म यावज्जीवमनुष्ठेयमित्याह—**कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः**-इति। ब्रह्मविदोऽपि यावद्विद्यापूर्ति जीवनमिष्टं भवतीति ज्ञापनाय सन्प्रयोगः । शतमिति च प्रायिकविषयम् । शतं समाः जीवन् अधिकारानुगुणानि कर्माणि कुर्वीतैव । न कदाचिदपि विद्याङ्गं कर्म परित्यजेदित्यर्थः । अस्य वाक्यस्य फलसाधनभूतस्वतन्त्रकर्मविषयत्वे विशेषहेतुभावस्सूत्रितः—'[1]नाविशेषात्' इति । अर्थान्तरं च प्रकरणाविरुद्धम् अनन्तरसूत्रोक्तम् । '[2]स्तुतयेऽनुमतिर्वा' इति भाष्यं—'वाशब्दोऽवधारणार्थः। 'ईशावास्यमिदं सर्वम्' इति विद्याप्रकरणाद्विद्यास्तुतये सर्वदा कर्मानुष्ठानानुमतिरियम् । विद्यामाहात्म्यात्सर्व-

---

**कू ॥** एवं विरक्तस्य विदुषः फलसङ्गकर्तृत्वादित्यागयुक्तो ब्रह्मविद्याङ्गभूतः कर्मयोगो यावज्जीवमनुष्ठेय इत्याह—**कुर्वन्नेवेति** । **शतं समाः**-शतसंवत्सरान्; प्रायिकवादोऽयम्। **कर्माणि**-नित्यनैमित्तिकानि कुर्वन्नेव, **इह**-लोके, **जिजीविषेत्** - जीवितुमिच्छेत्, ब्रह्मविदोऽपि यावद्विद्यापूर्ति जीवितुमिच्छा भवतीति प्राप्तत्वाच्छतसङ्ख्याकान्वत्सराञ्जीवन्नित्यनूद्य कर्माणि कुर्वीतैवेति विधिस्सङ्क्रामयितव्यः । यावज्ज्ञानयोगाधिकारं कर्मयोगः कर्तव्य इति भावः । कर्मयोगो नाम '[3]दैवमेवापरे यज्ञम्'

---

**श्री॥** बुभुक्षोर्भोगहेतुसुकृतप्रयोजकतयैव मुमुक्षोरपि मोक्षहेतुपरविद्यासहकारितया स्वाधिकारार्हेण केनचिदाकारेण कर्मयोगानुष्ठानावश्यकतामभिसन्धाय तदङ्गभूतं त्रिविधत्यागलक्षणानुसन्धानविशेषरूपमाकारं प्रथममन्त्रेऽभिधायाङ्गिभूतं कर्मयोगं स्वाङ्गिभूतपरविद्याया आप्रयाणादनुष्ठेयाया उपकारकतया यावज्जीवमनुष्ठेयं प्रतिपादयति 'कुर्वन्नेव' इत्यादिर्द्वितीयो मन्त्रः ॥ १ ॥ बुभुक्षूपयोगिनामेवच कर्मणां केनचिदाकारेण मुमुक्षोरप्यावश्यकता प्रदर्शयितुमेव कर्मकाण्डभूतसंहितान्त एव ज्ञानकाण्डोऽप्युपाक्रामि ॥ २ ॥ य एव यज्ञादयो धर्माः केवलाश्रमिणां बुभुक्षूणामपेक्षिताः ; त एव मुमूक्षूणामपि विद्याङ्गतयाऽपेक्षिताः; आकारमात्रेणैव भेदः, न तु कर्मस्वरूपभेद इत्ययमंशः 'सर्वथापि त एवोभयलिङ्गात्' ॥ ३ ॥ ४ ॥ ३४ ॥ इति सूत्रे सूत्रकारेणाऽपि दर्शितः ॥ ३ ॥

अस्य मन्त्रस्य विवरणम्—**एवं** - पूर्वमन्त्रोक्तप्रकारेण, त्रिविधत्यागलक्षणानुसन्धानपूर्वकमिति यावत् । मुमुक्षुर्भवानपीति शेषः, मुमुक्षुप्रकरणात्, 'जिजीविषेत्' इति प्रथमपुरुषनिर्देशानुगुण्यात्, उपदेशप्रकरणानुगुण्याच्च। **इह**—अस्मिन् विद्यायोनिजन्मनि, **कर्माणि** - स्ववर्णस्वाश्रमाधिकारानुगुणतया बुभुक्षुं प्रति प्राग्विहितानि सर्वाणि कर्माणि, **कुर्वन्नेव**-विद्याङ्गतया यथाशक्त्यनुतिष्ठन्नेव, **शतं समाः** - शतं संवत्सरान्, स्वायुरवसानपर्यन्तमिति यावत् । शतोक्तिस्तु '[4]शतायुः पुरुषः' इति पुरुषायुषस्य संवत्सरशतपरिमितत्वश्रवणेन प्रायशस्तत्सम्भवाभिप्रायेण कृता। यद्वा, शतशब्दोऽनेकमात्रपरः; अनेकान् संवत्सरानित्यर्थः। विद्यासिद्धिपर्यन्तमिति यावत् । **जिजीविषेत्** - जीवितुमिच्छेत्, विदुषोऽपि यावद्विद्यानिष्पत्ति तदङ्गकर्मानुष्ठानं जीवनं चेष्टव्यमेव भवतीत्यभिप्रायेण 'कुर्वन्नेव, जिजीविषेत्' इत्युक्तिः बुभुक्षुं प्रति विहितानां सर्वेषां कर्मणामविशेषेणानुष्ठाने विदुषोऽपि बुभुक्षोरिव बन्धः किं न स्यादित्याशङ्कापरिहारायोच्यते—**त्वयि नान्यथेतोऽस्ति**—इत्यादि। **नरे**-न रमत इति नरः;

---

१. ब्रह्मसू. ३-४-१३॥ २. ब्रह्मसू. ३-४-१४॥ ३. गी.४-२५॥ ४.यजु. का. १-५-१-६॥

वे ॥दा कर्म कुर्वन्नपि न लिप्यते कर्मभिरिति हि विद्या स्तुता भवति। वाक्यशेषश्चैतदेव दर्शयति— 'एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे' इति । त्वयि ब्रह्मविद्याधिकारिणि एवमेवानुष्ठेयार्थः, इतोऽन्यथा नास्तीति व्यतिरेकेणोक्तं दृढीकारार्थम् । ननु ब्रह्मविदोऽपि कर्मानुष्ठानभावाद्बन्धस्स्यादित्यत्राह—न कर्म लिप्यते नरे—इति। प्रस्तुते ब्रह्मविदि नरे। 'अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात्' इति विनियोगपृथक्त्वन्यायेन कर्म न स्वर्गादिफलहेतुर्भवति । विद्यानुपयुक्तकाम्यानां निषिद्धानां च विरक्तेन विवेकिना न बुद्धिपूर्वोपादानसम्भवः। संभावितानामपि केषांचित् 'नाविरतो दुश्चरितात्' इत्यादिबलात् स्वानुगुणा निष्कृतिस्स्यात् । तदधिगमाधिकरणे तु प्रामादिकानामेवाश्लेषः परविद्यावतामपि स्थापितः । ज्ञानाग्निदग्धाधिकारो विधिनिषेधानधिकारीति पक्षस्तु न वेदवित्सम्मतः ॥ २ ॥

---

कू॥इत्यादिना विकल्पविहितेषु कर्मयोगावान्तरभेदेष्वेकं यथारुच्यङ्गितया स्वीकृत्यान्यानि नित्यनैमित्तिकानि तदङ्गतयोपसंहृत्यासङ्गकर्मानुष्ठानविशेषः ; न कदाचिदपि विद्याङ्गं कर्म परित्यजेदित्येवकाराभिप्रायः । **त्वयि** - ईश्वरपरतन्त्रात्मस्वरूपतया तदाज्ञापरिपालनरूपकर्मानुष्ठाने अधिकारपूर्तिमतीति भावः। **एवम्**-एवमेवानुष्ठेयानीत्यर्थः।उक्तमर्थं व्यतिरेकेण स्थिरीकरोति—**नान्यथेतोऽस्तीति**। **इतः**- अनुष्ठानात्, ***अन्यथा***—प्रकारान्तरम् अनुष्ठानं नास्तीत्यर्थः । ननु ब्रह्मविदोऽपि कर्मानुष्ठानावश्यंभावे बन्धस्स्यादित्यत्राह—**न कर्म लिप्यते नरे**-इति। विद्याविरुद्धेषु कर्मफलेषु न रमत इति-**नरः**। प्रस्तुते ब्रह्मविदि नरे विद्याङ्गतया क्रियमाणः कर्मयोगो न लिप्यते न स्वर्गादिहेतुर्भवति, अपि तु ज्ञानयोगद्वारा वा साक्षाद्वा प्रथमं परिशुद्धजीवात्मविषयकयोगमुत्पाद्य पश्चाद्भक्तियोगाङ्गभूतं प्रत्यगात्मसाक्षात्कारमेवोत्पादयतीति भावः । यत्तु—'कुर्वन्नेवेह कर्माणि' इत्ययं विधिः अविद्वद्विषय एव, न ब्रह्मविद्विषय इति, तस्य विधिनिषेधशास्त्रवश्यत्वाभावात्तस्य ब्रह्मज्ञानाग्निना अधिकारः प्रणष्ट इति शाङ्करं व्याख्यानं, तत्प्रकरणविरुद्धं, 'विद्यां चाविद्यां च यस्तद्वेदोभयं सह । अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते' इत्युपरितनविध्यन्तरविरुद्धं चेति न वेदविदो बहुमन्यन्ते ॥

---

श्री॥तस्मिन्-फलानुरागरहिते, एतत्फलं मम न स्यादित्यभिसन्धिमतीति यावत् । **त्वयि, कर्म** पूर्वोक्तेषु कर्मसु किमपि कर्म, **न लिप्यते** - संश्लेषानुकूलव्यापारवन्न भवति, स्वसत्तामात्रेण मोक्षविरोधिफलोपधायकसंबन्धविशेषानुकूलव्यापारवन्न भवति। इतः - अस्मात्प्रकारात्, **अन्यथा** - प्रकारान्तरं मोक्षविरोधिफलोपधायकसम्बन्धविशेषानुकूलव्यापारवत्त्वलक्षण, **नास्ति** - कदाऽपि न भवतीति॥४॥ प्रागुक्तलक्षणत्रिविधत्यागरूपानुसन्धानपूर्वकं परविद्याङ्गतया कर्माण्यनुतिष्ठतः कदाचिदपि मोक्षविरोधिफलप्राप्तिलक्षणबन्धप्रसङ्ग एव न सम्भवतीति भावः ॥ ५ ॥ 'इतोऽन्यथा नास्ति' इत्यभिधानम्, इदं तात्त्विकमेव न स्तुतिमात्रमिति ज्ञापनाय ॥ ६ ॥ अत एव 'स्तुतयेऽनुमतिर्वा' ॥ ३ ॥ ४ ॥ १४ ॥ इति सूत्रश्रुतप्रकाशिकायामिदं श्रुतिखण्डं 'नरे - न रमत इति नरः - निस्सङ्गः, तस्मिन् ; इतोऽन्यथा नास्ति - नरे त्वयि न कर्म लिप्यत इतीतोऽन्यथा नास्ति, इदमेव तत्त्वं, न स्तुतिमात्रमित्यर्थः' इति व्यासार्यैरपि व्याख्यातम् ॥ ७ ॥ दर्शितत्रिविधत्यागलक्षणानुसन्धानविशेषवतां मोक्षविरोधिफलासम्भवस्स्पष्टमुक्तो भगवताऽपि गीताशास्त्रे 'अनिष्टमिष्टं मिश्रञ्च त्रिविधं कर्मणः फलम् । भवत्यत्यागिनां प्रेत्य न तु सन्न्यासिनां क्वचित्' ॥ १८ ॥ १२ ॥ इति । 'सर्वकर्माण्यपि सदा

---

१. ब्र-सू. ४-१-१६ ॥ २. कठोप. २-२४ ॥ ३. ११-मं ॥

श्रीऽ॥कुर्वाणो मद्व्यपाश्रयः । मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम्' ॥ १८ ॥ ५६ ॥ इति च ॥८॥ अत्र द्वितीयश्लोकेऽपि 'मद्व्यपाश्रयः' इत्यस्य मयि सन्न्यस्तकर्तृत्वादिक इत्यर्थकतया यथोक्तलक्षणत्यागवतस्सर्वाणि कर्माणि कुर्वतोऽपि मोक्षविरोधितत्तत्फलप्रसङ्गमन्तरेणैव मोक्षप्राप्तिरभिहिता ॥ ९ ॥ अत्र सर्वशब्देन काम्यकर्मणामपि विवक्षितत्वेन तेषामपि विदुषा दर्शितत्यागलक्षणाभिसन्धिविशेषवतानुष्ठीयमानानां विद्यामाहात्म्येन विद्योपकारकतयैव पर्यवसानस्य मोक्षविरोधितत्फलप्रसङ्गविरहस्य च सिद्धेश्चेहाभिप्रेततया विद्यास्तुतिरपि विवक्षिता ॥ १० ॥ नित्यनैमित्तिककर्मणा कामोपनिबन्धमन्तरेण बुभुक्षून् मुमुक्षूंश्च प्रत्यविशेषेणैव विधानेन विनियोगपृथक्त्वन्यायेनैव तत्तदधिकार्युद्देश्यप्रधानफलानुगुण्यसिद्ध्या तद्विरोधिफलप्रसङ्गाभावात्, इह तत्प्रसङ्गसम्भवमाश्रित्य तत्प्रतिषेधदर्शनात्, कामोपनिबन्धपूर्वकं विहिताना - काम्यकर्मणामेव विरोधिफलहेतुत्वस्वभावनैयत्याच्च, विद्यामाहात्म्येन तेषामेवेह विरोधिफलहेतुत्वलक्षणलेपकत्वप्रसङ्गपरिहारमुखेन विद्यास्तुतेरिह विवक्षितत्वात्, काम्यकर्मणामत्राविवक्षितत्वे तदनिर्वाहाच्च, तान्यप्यत्र विवक्षितान्येवेत्यवगम्यते ॥ ११ ॥ तदिदं सर्वमभिप्रेत्यैव पुरुषार्थाधिकरणे 'स्तुतयेऽनुमतिर्वा' ॥ ३ ॥ ४ ॥ १४ ॥ इति सूत्रे सूत्रकारेणास्या श्रुतौ विदुषस्सर्वेषा कर्मणामनुमतिर्विद्यास्तुत्यर्थेत्युक्तम् ॥ १२ ॥ एतेन विद्वद्विषयैवेयं श्रुतिः - विदुषोऽपि विद्याङ्गतया यावज्जीवं कर्मानुष्ठानमावश्यकमेवेति प्रतिपादयति 'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतँ समाः' इति ; न त्वविदुष इति सिद्धम् ॥ १३ ॥

यत्तु, पूर्वमन्त्रेणात्मविदो विदुषो विद्यास्वरूपोपदेशः कृतः-आत्मग्रहणाशक्तस्याविदुषः कर्माण्युपदिशत्ययम्मन्त्रः, नतु विदुषः, विद्याकर्मणोरत्यन्तविरोधेनैकं प्रत्युभयोर्विधानायोगात्, सूचितं चात्रापि 'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतँ समाः' इत्यनेन जिजीविषुरेव कर्माधिकारीति । विदुषो जीवितेच्छाविरहाच्च नायं मन्त्रो विद्वद्विषय इति शङ्करोक्तमुपनिषद्भाष्ये ॥ १४ ॥ तत्र पूर्वमेकोनपञ्चाशदध्याय्यात्मककर्मकाण्डेनाविद्वद्विषयवक्तव्यसर्वकर्मनिरूपणानन्तरं प्रवृत्ते ज्ञानकाण्डरूपे विद्वद्विषयेऽस्मिन् पञ्चाशाध्याये प्रकरणविरोधेनाविदुषः प्रसङ्गलेशाभावात्, 'सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्' ॥ ३ ॥ ४ ॥ २६ ॥ इत्यधिकरणे 'अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात्' ॥ ४ ॥ १ ॥ १६॥ इत्यधिकरणे च सूत्रकारेणैव कर्मवत्सु गृहस्थेषु विद्यायाः कर्माङ्गकत्वस्य निर्धारितत्वेन, अस्यामेवोपनिषद्युत्तरत्र 'विद्याञ्चाविद्याञ्च यस्तद्वेदोभयँ सह' इत्यत्र विद्याकर्मणोरेकैकानुष्ठानेऽनर्थप्रदर्शनपूर्वकमुभयोरङ्गाङ्गिभावेन सहानुष्ठेयतायाः स्थापयिष्यमाणत्वेन च विद्याकर्मणोर्विरोधस्यैवाप्रामाणिकत्वात् ; तत्राप्यन्यथा व्याख्यानस्यासमञ्जसताया वक्ष्यमाणत्वात्, विदुषोऽपि विद्यानिष्पत्तिपर्यन्तं देहधारणस्यावश्यकतया जीवितेच्छाया अप्यविरुद्धत्वेन तावन्मात्रेणास्य मन्त्रस्याविद्वद्विषयताया वक्तुमशक्यत्वात् ; 'नाविशेषात्' ॥ ३ ॥ ४ १३ ॥ 'स्तुतयेऽनुमतिर्वा' ॥ ३ ॥ ४ ॥ १४ ॥ इति सूत्राभ्यामस्य मन्त्रस्य विद्वद्विषयतायास्सूत्रकारेणोक्तत्वेन सूत्रकाराशयविरोधाच्च ॥ १५ ॥

यदपि 'नाविशेषात्' इति सूत्रस्य 'कुर्वन्नेवेह कर्माणि जिजीविषेत्' इत्येवमादीनि न विद्वद्विषयाणि - विद्वदविदुषोर्व्यावर्तकरूपेण निर्देशमन्तरेणाविशेषेणैव कर्मानुष्ठाननियमविधानात्, तस्मादविद्वद्विषयाण्येव भवितुमर्हन्तीत्येतदर्थपरतया व्याख्यानं ; 'स्तुतयेऽनुमतिर्वा' इति सूत्रस्य 'यद्यप्यत्र प्रकरणसामर्थ्याद्विद्वानेव कुर्वन्निति सम्बध्येत ; तथाऽपि, विद्यास्तुतये कर्मानुज्ञानमेतदिति द्रष्टव्यम्' इत्यर्थपरतया व्याख्यानञ्च शारीरकभाष्ये शङ्करेण कृतम् ॥ १६ ॥ तदप्ययुक्तं - पुरुषार्थाधिकरणे विद्याङ्गकात्स्वतन्त्रात्कर्मणः पुरुषार्थो वा ? उत विद्यातः पुरुषार्थो वा' इत्येव विप्रतिपत्तेः प्रसक्त-

श्री॥तिष्ठेदेव;न कदाचिदपि विद्याङ्गं कर्म परित्यजेदित्यर्थः' इति नियमतः कर्मानुष्ठानविधिपरतामेव व्याख्याय, द्वितीयभागस्य त्वयि ब्रह्मविद्याधिकारिणि, एवमेवानुष्ठेयार्थः; इतोऽन्यथा नास्तीति व्यतिरेकेणोक्तं दृढीकारार्थं; ननु ब्रह्मविदोऽपि कर्मानुष्ठानभावाद्बन्धस्स्यादित्यत्राह—'न कर्म लिप्यते नरे' इति। प्रस्तुतब्रह्मविदि नरे 'अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात्' इति विनियोगपृथक्त्वन्यायेन कर्म न स्वर्गादिफलहेतुर्भवति' इत्यर्थपरतामेव व्याकुर्वद्भिर्वाक्यशेषस्य सूत्रकारभाष्यकारोक्तं विद्यास्तुतये विदुषस्सर्वदा कर्मानुष्ठानानुमतिपरत्वमुपेक्षितम्॥ २९ ॥ तदयुक्त, दर्शितसूत्रयोर्द्वयोरप्येकविधार्थस्थापनपरताया एव दर्शनेन परस्परविलक्षणपक्षद्वयपरत्वाभावात्; तथा सति वाकारस्य पक्षान्तरपरत्वसम्भवेन तदुपेक्ष्य 'वाशब्दोऽवधारणार्थः' इति भाष्यकारैरवधारणपरतया व्याख्यानानावश्यकत्वात्, सूत्रकारमहर्षिकण्ठोक्तश्रुत्यर्थस्यार्वाचीनैः परित्यागायोगात्, तदपरित्यागेऽप्यनिष्टाभावस्य प्रागुपदर्शितत्वात्; वस्तुतो गार्हस्थ्यादाश्रमान्तरनिष्ठानां विदुषामुक्तकर्मत्यागस्याभिमतताया: 'कामकारेणचैके' ॥ ३ ॥ ४ ॥ १५ ॥ इत्युत्तरसूत्रेण प्रतिपन्नतया, सामान्यतो विद्वांसं प्रति नियमत उक्तकर्मानुष्ठाने विधेरसम्भवेनानुमतेरेव दर्शितश्रुतिविवक्षितत्वावश्यकत्वाच्च॥ ३० ॥ दर्शितश्रुतेर्दर्शितरीत्या कर्मानुष्ठानविधिपरत्वासम्भवाभिप्रायेणैव च, वाकारस्यावधारणार्थकत्वमाश्रित्य यावज्जीवं कर्मानुष्ठानानुमतिरेव दर्शितश्रुतिविवक्षिता, न तु तद्विधिरिति भाष्यकारैरपि व्याख्यातम् ॥ ३१ ॥ एतदभिप्रायेणैव च श्रुतप्रकाशिकाया व्यासार्यैरपि दर्शितश्रुतौ 'नान्यथेतोऽस्ति' इत्यस्य पूर्वभागोक्तकर्मानुष्ठानान्यथाभावप्रतिषेधपरतामुपेक्ष्य वाक्यशेषोक्तकर्मलेपाभावान्यथाभावप्रतिषेधपरतया व्याख्यानं कृतम्॥ ३२ ॥ 'एवमर्थस्वाभाव्येन चोद्यं परिहृत्य 'कुर्वन्नेवेह कर्माणि'इत्यस्य वाक्यस्यार्थमाह' इति द्वितीयसूत्रावतारिकाभाष्यपर्यालोचने,दर्शितश्रुतौ कर्मपदार्थस्य विद्याङ्गकर्मसाधारणरूपत्वलक्षणस्वभावज्ञापनेन चोद्यं परिहृत्य वाक्यार्थोऽपि तदनुगुण एव वर्तत इति तं दर्शयति सूत्रकार इत्याशयेनैव द्वितीयसूत्रमवातारयन् भाष्यकृत इत्यवगमेन द्वयोरपि सूत्रयोर्दर्शितश्रुतेरेकविधवाक्यार्थप्रतिपादनपरताया एव प्रतीयमानतया, 'अर्थान्तरञ्च प्रकरणाविरुद्धमनन्तरसूत्रोक्तम्' इत्यभिधानमप्यसङ्गतमेव ॥ ३३ ॥ तृतीयसूत्रस्य दर्शितश्रुतेरर्थान्तरपरतया व्याख्यानपरत्वे, श्रुतिमर्थान्तरपरतयापि व्याकरोति सूत्रकार इत्येव द्वितीयसूत्रमवातारयिष्यन् भाष्यकृतः,व्याख्यास्यंश्च वाकारं पक्षान्तरपरतयैव.न त्ववधारणपरतयेति तथाभिधानमसम्बद्धमेव ॥ ३४ ॥ न चाश्रमान्तरनिष्ठस्याग्निहोत्रदर्शपूर्णमासादिकर्मस्वनधिकारेण तादृशकर्मानुष्ठानासम्भवेऽपि विद्यानुग्राहकतया स्वाश्रमान्तरङ्गधर्मरूपकर्मणामनुष्ठानसम्भवेन दर्शितश्रुतेस्सामान्यतो विद्वांसं प्रति यावज्जीव नियमतः कर्मानुष्ठानविधिपरत्वं सम्भवत्येवेति कुतोऽनुमतिपरत्वं वक्तव्यमिति वाच्यं. पूर्वं कर्मकाण्ड आश्रमान्तरकथाया एवाभावेन तत्र गृहस्थाधिकारिकयज्ञादिकर्मणामेवाभिधानात्तेषामेवेह कर्मशब्देन परामर्शसम्भवेन तदनुष्ठाननिर्बन्धस्य सामान्यतो विद्वांसं प्रति विधातुमशक्यतयात्र लिङोऽनुमतिलक्षणामन्त्रणपरताया एव सम्भवात् ॥ ३५ ॥ इत्थमिह पक्षान्तरपरत्वासम्भवं 'विधिर्वा धारणवत्' ॥ ३ ॥ ४ ॥ २० ॥ इत्यादिष्विवावधारणपरतयापि वाकारप्रयोगसम्भवञ्चालोच्यैवेह वाकारमवधारणपरतया व्याचख्युर्भाष्यकृतः ॥ ३६ ॥ तस्माद्यथोक्तलक्षणं वेदान्ताचार्यतदनुयायिव्याख्यानमपि सूत्रकारभाष्यकारश्रुतप्रकाशिकाकाराशयविरुद्धमनुपपन्नञ्चेत्यनुपादेयमेव ॥ ३७ ॥

ननु 'न कर्म लिप्यते नरे' इति कथमसौ प्रयोगः ? लिम्पतेस्तौदादिकस्य सकर्मकत्वेनाकर्मकत्वासम्भवादिति चेन्न, सकर्मकाणामपि धातूनां कर्मकर्तर्यकर्मकतया प्रयोगसम्भवेन लिम्पतेरिह कर्मकर्तरि प्रयोगस्य विवक्षिततया दोषाभावात्॥३८॥पचिभिद्यादीनां सकर्मकाणामपि कर्मण एव

**असुर्या नाम ते लोका अन्धेन तमसावृताः ।**
**तांस्ते प्रेत्याभिगच्छन्ति ये केचात्महनो जनाः ॥ ३**

वे॥वक्ष्यमाणविद्यायां शीघ्रं प्रवृत्त्यर्थमुक्तप्रकारब्रह्मवेदनविधुरतया वित्तैषणायोगाच्च अन्यथा भवद्भिर्ज्ञानानुष्ठानैरात्मघातिनां निरयपातोऽवश्यम्भावीत्याह — **असुर्याः जनाः** — इति ।

कू॥एवं मन्त्रद्वयेन तत्त्वत्रयस्वरूपं विद्याङ्गकर्मानुष्ठानस्वरूपञ्च यथावदुपदिष्टम्।इदानीं येकेचनासुरप्रकृतयो यथोपदेशं तत्त्वत्रयमविदित्वाऽन्यथा जानन्ति, कामक्रोधलोभाद्यन्वितास्सन्तश्शास्त्रविधिमु-

श्री॥कर्तृत्वविवक्षायाम् , 'ओदनः पच्यते, काष्ठं भिद्यते' इत्यादिरकर्मकः प्रयोगो हि दृश्यते॥३९॥ 'कर्मवत्कर्मणा तुल्यक्रियः' ॥ ३ ॥ १ ॥ ८७ ॥ इत्यनुशासनेन कर्तृत्वेन विवक्षितस्यापि कर्मणः कर्मवद्भावे, 'सार्वधातुके यक्' ॥ ३ ॥ १ ६७ ॥ इत्यनुशासनेन 'धातोर्यक्प्रत्ययस्स्याद्भावकर्मवाचिनि सार्वधातुके परे', इत्यर्थकेन यक्प्रत्यये च, लिम्पतेर्लिप्यत इति कर्मकर्तरि प्रयोगोऽकर्मकस्संभवति ॥ ४० ॥ नच, यद्धातूपस्थाप्यक्रियायां यस्य क्वचित्कर्मतयान्वयो दृश्यते ; तद्धातूपस्थाप्यक्रियायां तस्यैव क्वचित्कर्तृतया विवक्षायां हि तद्धातोः कर्मकर्तरि प्रयोगो नाम , लिम्पतिक्रियाया सुकृतरूपस्य दुष्कृतरूपस्य वा कर्मणः क्वचिदपि कर्मतयाऽन्वयादर्शनात् , प्रत्युत 'कर्मणा लिप्यते पुरुषः' इत्यादौ कर्तृतयैवान्वयदर्शनाच्च कथं तस्य कर्तृताविवक्षायां लिम्पतेः कर्मकर्तरि प्रयोगस्सम्भवतीति वाच्यम् , महापातकिनस्स्वसंसर्गिषु स्वीयं दुष्कृतं लिम्पन्ति, विद्वांसो मुच्यमानाः स्वीयं सुकृतं सुहृत्सु, दुष्कृतं द्विषत्सु च लिम्पन्तीत्यादिप्रयोगेषु लिम्पतिक्रियायां कर्मशब्दवाच्यस्य कर्मतयान्वयदर्शनेनेह तस्य कर्तृताविवक्षायां कर्मकर्तरि प्रयोगसम्भवे क्षतिविरहात्॥ ४१ ॥ संश्लेषानुकूलव्यापारो हि लिम्पत्यर्थः ; संश्लेषश्च फलोपधायकस्सम्बन्धविशेष इति, प्रकृते 'न कर्म लिप्यते नरे त्वयि' इत्यनेन फलाभिसन्धिरहिते त्वयि दर्शितत्रिविधत्यागपूर्वकमनुष्ठीयमानं किमपि कर्म मोक्षविरोधिफलोपधायकस्वसम्बन्धविशेषानुकूलव्यापाररूपलेपवन्न भवतीत्यर्थस्सिध्यति ॥ ४२ ॥ पूर्वमन्त्रोक्तत्यागानुवादकलेपाभावहेतुगर्भविशेषणत्वाभिप्रायेण च नरशब्दः ' न रमते ' इति व्युत्पत्त्या व्याख्यातश्श्रुतप्रकाशिकायां व्यासार्यैः ॥ ४३ ॥ ' अन्येष्वपि दृश्यते '॥ ३ ॥ २ ॥ १०१ ॥ इत्यनुशासनेन रमेर्डप्रत्यये 'टेः' ॥ ६ ॥ ४ ॥ १४३ ॥ इत्यनुशासनेन टिलोपे च, र इति सिध्यति; तस्य नशब्देन 'सुप्सुपा' इति समासे, नर इति रूपं सिध्यतीति बोध्यम् ॥ ४४ ॥ यद्यपि, 'रिङ् क्षये' इति धात्वन्तरेण नरशब्दस्य क्वचिन्निष्पत्तिः कृता दृश्यते, तथापि तद्वदेव रमिधातुनापि निष्पत्तिसम्भवात्प्रकृतोपयोगानुरोधेनेहैतद्धातुनिष्पन्न एव नरशब्दो विवक्षित इति व्यासार्याशयः ॥ ४५ ॥ तथा च प्रथममन्त्रप्रक्रान्ताया उपरिष्टाद्विशदं निरूपयिष्यमाणायाश्च परविद्याया अङ्गतयानुष्ठेयः प्रथममन्त्रोक्तत्यागलक्षणानुसन्धानविशेषाङ्गकः कर्मयोगोऽनेन मन्त्रेणाभिहित इति सिद्धम् ॥ ४६ ॥ इति द्वितीयमन्त्रव्याख्यानम् ॥ २ ॥

प्रथमद्वितीयसूत्रप्रक्रान्तपरविद्यातदङ्गकर्मानुष्ठाननिष्ठाविरहिणामविदुषां तादृशनिष्ठायां द्रुतप्रवृत्तये तदभावे महानर्थप्रसङ्गः प्रदर्श्यते—**असुर्या नाम** इत्यादिना तृतीयेन मन्त्रेण ॥

१. 'सह सुपा' इति सूत्रे 'सह' इति 'सुपा' इति च योगद्वयं विभज्यते । तत्रोभयत्रापि सुबित्यनुवर्तते । तथा च 'सुबन्तं समर्थेन सह समस्यते । सुबन्तं सुबन्तेन सह समस्यते' इति योगद्वयस्याप्यर्थः । तत्र 'सुप्सुपा' इत्ययं 'सुपा' इत्यस्य अर्थानुवादः ॥

वे॥**असुर्याः**-'असुरस्य स्वम्'इतियत्;आसुरप्रकृतीनामनुभाव्या इत्यर्थः। **नामे**ति प्रसिद्धौ।ते नरकसंज्ञिताः भीषणतमाः लोकास्सन्ति । पुनस्तान्विशिनष्टि—**अन्धेन तमसावृताः**—गाढेनान्धकारेण व्याप्ताः। **तान्** - आलोकप्रसङ्गरहितान्, **ते**-स्वात्मघातिनः, । **प्रेत्य**-तदातनदेहादुत्क्रम्य । **अभिगच्छन्ति**-कात्स्न्येंन निरन्तरं प्राप्नुवन्ति, **येकेच**-देवजातीया मनुष्यजातीया वा तथा ब्राह्मणक्ष-

---

कू॥त्सृज्य यज्ञादिकर्म कुर्वन्ति, निषिद्धानि चाचरन्ति, ते सर्वे स्वात्मघातिनः।तेषां निरयपातोऽवश्यंभावीत्युपदिशत्याचार्यः —**असुर्या** इति। असुराणां स्वभूता असुर्याः, असुरस्वभावभूता वा, आसुरप्रकृतीनामेवानुभाव्याः, अन्येषां दैवप्रकृतीनामनुभवितुमशक्या इत्यर्थः । अतिभीषणा इति यावत् । **नामे**ति प्रसिद्धौ । अतिभीषणा नरकसहितास्ते लोकास्सन्तीति सर्वशास्त्रप्रसिद्धमिति भावः । पुनस्तान् विशिनष्टि—**अन्धेन तमसावृता** इति । **अन्धेन** - अतिगाढेन, **तमसा** - अन्धकारेण, **आवृताः**-व्याप्ताः, **तान्**-अतिभीषणानालोकप्रसङ्गरहिताश्च लोकानिति भावः । **येकेच**-देवजातीया मनुष्यजातीया वा, तत्रापि ब्राह्मणा वा क्षत्रियादयो वा, **आत्महनः**—'असन्नेव स भवति । असद्ब्रह्मेति वेदचेत्' इत्याम्नातामसत्कल्पतां स्वात्मानं नयन्तः, ब्रह्मज्ञानहीनाः काम्यकर्मादिनिष्ठा इत्यर्थः। तथा च बृहदारण्यके 'अनन्दा नाम ते लोका अन्धेन तमसावृताः । तांस्ते प्रेत्याभिगच्छन्ति अवि-

---

श्री॥अस्य पदविवरणम्—**अन्धेन** अन्धयतीत्यन्धम् तेन अतिगाढेन, सूर्यालोकप्रसङ्गविरहिणेति यावत्, **तमसा** - अन्धकारेण, **वृताः** - व्याप्ताः, **असुर्या नाम** - असुर्या इति संज्ञया प्रसिद्धाः, नामेति प्रसिद्धौ । 'उगवादिभ्यो यत्' ॥ ५ ॥ १ ॥ १ ॥ इत्यनुशासनेन, उवर्णान्ताद्गवादिभ्यश्च यत्स्यात्प्राक्क्रीतीयेष्वर्थेष्वित्यर्थकेन, 'तस्मै हितम्'॥ ५॥ १॥५॥ इत्यनुशासनसिद्धेऽर्थे, असुरशब्दस्य गवादिगणघटकतया यत्प्रत्यये,असुरेभ्यो हिता असुर्या इति व्युत्पत्त्या,'असुरस्य स्वम्'॥४॥४॥१२३॥ इत्यनुशासनेनासुरशब्दात् 'असुरस्य स्वम्'इत्यर्थे यत्प्रत्ययो भवतीत्यर्थकेन यत्प्रत्यये, असुराणां स्वभूता असुर्या इति व्युत्पत्त्या वा, असुरहितत्वेन, असुरस्वामिकत्वेन वा प्रवृत्तिनिमित्तेनासुर्यसंज्ञया प्रसिद्धा इत्यर्थः । अनेन विशेषणद्वयेनासुरेतरेषामतिदुःखदा इति सूचितम् । **ते**-तत्र तत्र श्रुतिषु प्रसिद्धाः, श्रूयते हि बृहदारण्यकोपनिषदि षष्ठाध्यायचतुर्थब्राह्मणे 'अनन्दा नाम ते लोका अन्धेन तमसावृताः । तांस्ते प्रेत्याभिगच्छन्त्यविद्वांसोऽबुधो जनाः' ॥ ६ ॥ ११ ॥ इति । कठोपनिषदि प्रथमवल्ल्यामपि 'पीतोदका जग्धतृणा दुग्धदोहा निरिन्द्रियाः । अनन्दा नाम ते लोकास्तान् स गच्छति ता ददत्'॥ १ ॥ १ ॥ ३॥ इति च। अतश्च, असुर्यसंज्ञितानामेव लोकानाम्, 'अनन्दा' इत्यपि संज्ञान्तरमस्तीत्यवगम्यते ; 'अन्धेन तमसा वृताः' इति स्वरूपस्य द्वयोस्तुल्यतादर्शनात्, **लोकाः** ईदृशा लोकाः केचन सन्ति, **तान् लोकान्**,**ते** प्राणिनः **प्रेत्य**-मृत्वा, **अभिगच्छन्ति**-अभिमुखा गच्छन्ति, कदाचित्तद्धेतुदुष्कृतप्रसङ्गवशात्तत्प्राप्त्युन्मुखास्सन्तः प्राप्नुवन्ति, 'अपि गच्छन्ति' इति माध्यन्दिनपाठेऽप्ययमेवार्थो बोध्यः । अपिधानमित्यादाविवात्राप्यपीत्यस्योपसर्गत्वादुपसर्गाणामनेकार्थत्वसंभवात्पाठद्वयैककण्ठ्यानुरोधाच्च। के ते प्राणिन इत्यत्राह—**येकेचे**ति । **येकेच**-येकेचि[, **आत्महनः**-आत्मानं घ्नन्ति नाशयन्तीत्यात्महनः, पूर्वोक्तलक्षणस्वस्वरूपपरस्वरूपयाथात्म्याज्ञानविपरीतज्ञानाभ्यामात्मानम् 'असन्नेव स भवति । असद्ब्रह्मेति वेदचेत्'[1] इत्युक्तमसत्कल्पत्वलक्षणं स्वरूपनाश प्रापयन्तः । प्रागुदाहृतश्रुत्यन्तरैककण्ठ्यात्प्रकरणानुरोधाच्चाज्ञत्वलक्षणमात्महन्तृत्वमेवेह विवक्षितम् । **जनाः**-पुनःपुनर्जननधर्माणस्संसरन्तः, सन्ति, ते तानभिगच्छन्तीत्यन्वयः—इति ॥

---

१. तै. आन. ६-१ ॥

**अनेजदेकम्मनसो जवीयो नैनद्देवा आप्नुवन् पूर्वमर्षत् ।**
**तद्धावतोऽन्यानत्येति तिष्ठत्तस्मिन्नपो मातरिश्वा दधाति ॥ ४**

---

**वे॥**त्रियादयो वा **आत्महनः**-'असन्नेव स भवति असद्ब्रह्मेति वेदचेत्' इत्याम्नातामसत्कल्पतां स्वात्मानं नयन्तः; देहपातमुखेन पातकवर्गोपलक्षणमिदम् । **जनाः**-जनिमन्तः । संसरन्त इत्यर्थः ॥ ३ ॥

सर्वावासत्वेन प्रस्तुतमीश्वरतत्त्वं विरुद्धवदभिलापव्यञ्जितेन विचित्रशक्तियोगेन विशदयति— **अनेजदेकं मनसो जवीय** इति । **अनेजत्**-अकम्पमानम् , **एकं** - प्रधानभूतं, स्वानधीनस्वसमानद्वितीयरहितं वा, **मनसो जवीयः** - वेगवत्तरमनसोऽप्यतिशायितजव । नन्विद न जाघटीति

---

**कू॥**द्वांसोऽबुधो जनाः' इति। देहपातमुखेन पातकवर्गस्य चोपलक्षणमिदम् । पातकिनश्च ये **जनाः**-जनिमन्तः, संसरन्त इत्यर्थः । स्वात्मघातिनस्ते सर्वे, **प्रेत्य**-तदातनदेहादुत्क्रम्य, **अभिगच्छन्ति**-अभितो गच्छन्ति, सर्वान्पृथिव्यन्तरिक्षस्वर्गरौरवादिसंज्ञितानपि नारकलोकान्निरन्तरं गच्छन्तीत्यर्थः॥३॥

एवं तृतीयेन मन्त्रेण विद्यायां शीघ्रप्रवृत्तिसिद्ध्यर्थम् अविदुषामनर्थ उक्तः, अथ आचार्यस्सर्वावासत्वेन प्रस्तुतस्य परस्य ब्रह्मणोऽनन्तविचित्रशक्तियोगं विरुद्धवदभिलापेन व्यञ्जयन्नुपदिशति— **अनेजदेकमि**ति । **अनेजत्** - 'एजृ कम्पने,' अकम्पमानम्, **एकं** - प्रधानतमं, शास्त्रविदुषां स्वाधीनस्व समानाधिकद्वितीयरहितमिति वा, 'न तत्समश्चाभ्यधिकश्च दृश्यते' इति श्रुतेः । परमसाम्यमापन्ना अपि मुक्ताः ब्रह्माधीना एवेति भावः। **मनसो जवीयः** - वेगवतो मनसोऽपि जवीयः वेगवत्तरं, प्रकृत्यतिक्रान्तमपि देशं क्षणमात्रान्मनस्सङ्कल्पेन गच्छति चेत् ततः पूर्वमेव तत्र गच्छती-

---

**श्री॥**स्वस्वरूपपरस्वरूपयाथात्म्याज्ञानविपरीतज्ञानशालिनो जनास्तदधीनकादाचित्कप्रबलदुष्कृतपरिपाकवशात्कदाचिद्यथोक्तलक्षणान्महादुःखदान् लोकानप्यवश्यं प्राप्नुयुरेव, अतश्शीघ्रमेव यथोक्तलक्षणनिष्ठां प्राप्य तादृशमहासङ्कटप्राप्तेर्मोचनीय आत्मा विवेकिभिरिति भावः ॥ ३ ॥ अत्र स्वमतसिद्धाद्वैतज्ञानविधुराणां सर्वेषामसुरशब्दविवक्षितत्वम् , असुर्यलोकशब्दस्य महाक्लिष्टकल्पनया संसारमण्डलान्तर्जन्ममात्रपरतां, नामशब्दस्य निरर्थकताञ्चाश्रित्य शङ्करकृतं व्याख्यानमसमञ्जसम् ; 'असुर्या नाम ते लोकाः' इति श्रुत्यन्तरप्रसिद्धतयासुर्यसञ्ज्ञतया च काश्चिल्लोकान् पृथग्विभज्य निर्दिश्य, तेषाम् 'अन्धेन तमसा वृताः' इत्यतिसङ्कटरूपताञ्च प्रदर्श्य तत्प्राप्तेः फलत्वेन प्रतिपाद्यमानताया वचोभङ्ग्यैवापण्डितपामरमतिस्फुटत्वेनाकारणमेव तत्प्रहाणस्यायुक्तत्वात् ॥ ४ ॥ इत्थमेव विलक्षणज्ञाननिष्ठाया असंपादने महानर्थप्राप्तिस्सामवेदीयतलवकारोपनिषदि द्वितीयखण्डेऽप्युक्ता 'इह चेदवेदीदथ सत्यमस्ति न चेदिहावेदीन्महती विनष्टिः' इति ॥ ५ ॥ विपरीतज्ञानात्सर्वपापप्रसङ्गश्च 'योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते । किं तेन न कृत पापं चोरेणात्मापहारिणा' इत्यादिभिरप्युच्यते ॥ ६ ॥ तथा च यथोक्तलक्षणनिष्ठाविरहे महानर्थप्रसङ्गावर्जनीयताप्रतिपादनमुखेन सा शीघ्रं संपादनीयेत्येवास्य मन्त्रस्य निर्गलितोऽर्थ इति बोध्यम् ॥ ७ ॥ इति तृतीयमन्त्रव्याख्यानम् ॥ ३ ॥

आत्मनां बहुत्वस्य तत्रैकस्य परं सकलेतरातिशायिशक्तिमत्त्वस्य च प्रतिपादनेन, ईट्छब्दनिर्दिष्टपरमात्मनोऽन्येषाञ्च प्राक्प्रस्तुतमीशेशितव्यभावशेषशेषिभावादिक दृढीकर्तुं सर्वेश्वरं सकलेतरेभ्य आत्मभ्यो विशिनष्टि—**अनेजदि**त्यादिना चतुर्थेन मन्त्रेण ॥ १ ॥ अस्य पदविवरणम् **एकं** परमात्मशब्दितमात्मतत्त्वम् , **अनेजत्** 'एजृ कम्पने' इति भौवादिकाद्धातोश्शत्रन्तरूपमेजदिति।

---

१. भारते. उद्यो. ४१-३४ ॥

वे॥निष्कम्प्यत्वं वेगवत्तरत्वंचेति, मैव, तात्पर्यवृत्त्या सुघटितत्वात्. सर्वस्य स्वेन नित्यव्याप्तत्वादनेजत्, सर्वदा मनसो गोचरदेशमतिक्रम्य वृत्तेः मनसो जवीय उपचर्यते। एवमुत्तरेष्वपि वाक्येषु भाव्यम्। **नैनद्देवा आप्नुवन् पूर्वमर्षत्** प्रागेव सर्वान् प्राप्नुवत् देवा हिरण्यगर्भादयो नाप्नुवन् एतावन्तं काल न लेभिरे, विभुत्वेन नित्यप्राप्तमपि कर्मप्रतिबद्धज्ञानाः क्षेत्रज्ञाः विद्याधिगमात्पूर्व स्वबुद्ध्या न प्राप्नुवन्तीति न विरोधः। यथोक्तं छान्दोग्ये 'तद्यथा हिरण्यनिधि निहितमक्षेत्रज्ञा उपर्युपरि सञ्चरन्तो न विन्देयुरेवमेवेमास्सर्वाः प्रजाः अहरहर्गच्छन्त्य एत ब्रह्मलोक न विन्दन्त्यनृतेन हि प्रत्यूढाः' इति। **तद्धावतोऽन्यानत्येति तिष्ठत्**-'यः पृथिव्या तिष्ठन्' 'य आत्मनि तिष्ठन्'इत्यादिक्रमेण तत्सर्वत्र तिष्ठदेव धावतो गरुडादीनत्येति यावद्यावद्धावन्ति जविनस्तावतः परस्तादपि वर्तत इत्यर्थः। यथोच्यते 'वर्षायुतशतेनापि पक्षिराडिव संपतन्। नैवान्तं कारणस्येयाद्यद्यपि स्यान्मनोजवः' इति।

---

कू॥ति भावः। निष्कम्पं वेगवत्तरं चेति विरोधप्रतीतिः,परिहारस्तु—विभुत्वाद्वस्तुतोऽनेजत्, तत एव मनसोऽप्यगोचरदेशे सर्वदैव वृत्तेः मनसो जवीय इत्युपचर्यत इति। किञ्च—**देवाः** - ब्रह्मरुद्रादयोऽपि, **पूर्वमर्षत्** - प्रागेव सर्वान् देवान्प्राप्नुवदित्यर्थः। **एनत्** - प्रस्तुतं सर्वावास्य पर ब्रह्म, **नाप्नुवन्** - एतावन्तं कालं न लेभिर इति भावः। पूर्वमेव प्राप्तं न लेभिर इति विरोधभानं, विभुतया प्राप्तमपि कर्मसंकुचितज्ञानाः क्षेत्रज्ञा आचार्योपदेशाद्विना स्वबुद्ध्या नाप्नुवन्निति परिहारः। यथोक्तं छान्दोग्ये 'तद्यथा हिरण्यनिधिं निहितमक्षेत्रज्ञा उपर्युपरि सञ्चरन्तो न विन्देयुरेवमेवेमास्सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्त्यनृतेन हि प्रत्यूढाः' इति। अपि च—**तद्धावतोऽन्यानत्येति तिष्ठत्**—'य. पृथिव्या तिष्ठन्''य आत्मनि तिष्ठन्''यस्सर्वेषु भूतेषु तिष्ठन्'इत्यादिक्रमेण सर्वत्र तिष्ठदेव, **तत्**—ब्रह्म, **धावतोऽन्यान्**-गरुडादीनप्यत्येति। तिष्ठतः पुरुषस्य धावद-

---

श्री॥एजन्न भवतीत्यनेजत् - स्वस्थानात्स्वयमचलदेव, **मनसः** वेगकाष्ठापन्नतया लोके प्रसिद्धान्मनसोऽपि, **जवीयः** - अतिशयेन जववत् वेगवत्तरम्, जववच्छब्दादीयसुनि 'विन्मतोर्लुक्' ॥ ५ ॥ ३ ॥ ६५ ॥ इत्यनुशासनेन मतुपो लुक्। यद्वा 'तरस्वी त्वरितो वेगी प्रजवी जवनो जवः' इति कोशेन जवशब्दस्यापि वेगवत्पर्यायपाठात्तत एवेयसुनि जवीय इति भवति। चलनरहितस्य कथं जवीयस्त्वमिति चेत्, एकत्रावस्थितस्यात्यल्पकालेऽपेक्षितकार्यार्थमतिदूरदेशसन्निधानयोग्यतावत्त्वाभिप्रायेणेह परमात्मनो जवीयस्त्वव्यपदेशः। यथाऽन्यत्रापि 'अपाणिपादो जवनो ग्रहीता' इति; 'आसीनो दूरं व्रजति शयानो याति सर्वतः' इति च। एकस्यैककार्यानुगुणाकारेणावस्थितस्यैव सत्यसङ्कल्पस्य विभोः परमात्मनस्स्वरूपतस्सदा सर्वत्र व्याप्तत्वेनातिदूरदेशेऽप्यतिशीघ्रमेव सङ्कल्पमात्रेण स्वेष्टानुगुणाकारेण स्फुरणसम्भवेन चिन्तिततत्रत्यकार्यानुगुणाकारेण तत्र सन्निधानं हि नानुपपन्नम्; प्रसिद्धञ्च वैकुण्ठ दुग्धाब्धिप्रभृतिस्थानेष्वचञ्चल तिष्ठत एव भगवतस्ततोऽतिविप्रकृष्टस्थले प्रह्लादचिन्तासमकालमतिक्षिप्रमेव स्तम्भेस्फुरणतस्तद्रक्षणानुगुणाकारेण सन्निधानम्। तथा च मनोजवगतिभ्योऽप्यन्येभ्यस्सर्वेभ्योऽतिक्षिप्रमेव चिन्ताप्रदेशाच्चिन्तितप्रदेशे कार्यानुगुणसन्निधानयोग्यतावत्त्वमेव मनसो जवीयस्त्वमिह विवक्षितम्। यद्वा—एकाकारेण क्वचित्तिष्ठत एव भगवत आकारान्तरेणातिक्षिप्रमतिवेगगमनेनाप्यतिविप्रकृष्टस्थले चिन्तितकार्यार्थसन्निधानयोग्यत्वरूपमेव जवीयस्त्वमिह विवक्षितम्। दृश्यते हि भगवतस्तादृशमपि सन्निधान ग्राहग्रस्तगजेन्द्ररक्षणादौ। तथा च चिन्तासमकालमेवातिदूरदेशेऽपि सङ्कल्पमात्रेणातिवेगेन सन्निधानयोग्यतावत्तया प्रसिद्धान्मनसोऽप्यतिवेगेन ता-

---

१. श्वे. उप. ३-१९॥ २ कठो. १-२-२१॥

वे॥अन्येषां कश्चित्तिष्ठतां धावदतिक्रमणं नास्तीति वैचित्री।अन्यदपि किञ्चिदाश्चर्यमित्याह—**तस्मिन्नपो मातरिश्वा दधातीति** । तस्मिन्नवस्थितः अप्रतिबन्धानुगुणकाठिन्यादिरहितोऽपि वायुः अपो बिभर्ति । सर्वाधारभूतेन सर्वेश्वरेण विधृतस्स मातरिश्वा तच्छक्त्यैव पाथःपयोधरनक्षत्रग्रहतारकादिकं बिभर्तीत्युक्तं भवति । स्मर्यते हि—'द्यौस्सचन्द्रार्कनक्षत्रं खं दिशो भूर्महोदधिः । वासुदेवस्य वीर्येण विधृतानि महात्मनः' इति ॥ ४ ॥

---

कू॥तिक्रमणं न घटत इति विरोधप्रतिभानं, जविनो यावद्यावद्धावन्ति तावतस्तावतः परस्तादपि वर्तत इति तात्पर्यादविरोधः। यथोच्यते—'वर्षायुतशतैर्वापि पक्षिराडिव संपतन् । नैवान्तं कारणस्येयाद्यद्यपि स्यान्मनोजवः' इति । अन्यदपि किञ्चिदाश्चर्यमित्याह—**तस्मिन्नपो मातरिश्वा दधाति** तस्मिन् वासुदेवे अवस्थितो मातरिश्वा । अप इत्युपलक्षणम् । पाथःपयोधरग्रहनक्षत्रतारकादिकं बिभर्तीत्यर्थः । धारणानुगुणकाठिन्यरहितोऽपि वायुः पाथःप्रभृतिक बिभर्तीत्यद्भुतम् । सर्वाधारभूतेन सर्वेश्वरेण विधृतो वायुः तच्छक्त्यैव बिभर्तीत्यभिप्रायः । 'एष सेतुर्विधरण एषा लोकानामसंभेदाय' 'एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः' 'द्यौस्सचन्द्रार्कनक्षत्रं खं दिशो भूर्महोदधिः । वासुदेवस्य वीर्येण विधृतानि महात्मनः' इत्यादिषु प्रसिद्धमेतत् ॥ ४ ॥

---

श्री॥दृशसन्निधानयोग्यतावत्परमात्मवस्त्विति पक्षद्वयेऽपि फलितोऽर्थः । जवीयस्त्व विवृणोति—**नैनद्देवा** इत्यादिना **तिष्ठदि**त्यन्तेन वाक्यद्वयेन । **देवाः**-चिन्तासमकालं मनोजवगत्या चिन्तितस्थानसन्निधानयोग्यतावत्परमयोगिभ्यासजामदग्न्यादिभ्यो मनुष्येभ्योऽप्यधिकशक्तिमत्तया प्रसिद्धा ब्रह्मादयोऽपि देवाः ; स्वयं धावन्तोऽपीति शेषः, वक्ष्यमाणवाक्यानुरोधात् । **पूर्वं** - तद्धावनारम्भात्किञ्चित्पूर्वम्, **अर्षत्** - गच्छत् , न तु धावत्, 'ऋषि गतौ' इति धातोश्शतृ-लरूपमेतत् । यद्यपि तौदादिकोऽयं धातुः ; तथाऽपि च्छान्दसो गुणः । यद्वा धातुपाठे 'बहुलमेतन्निदर्शनम्' इत्यस्य 'दशगणीपाठो बहुलम्' इत्येतदर्थपरत्वमाश्रियापठितलौकिकवैदिकधातूनामपि यथाप्रयोगमेष्टव्यताया अपि स्वीकारात्प्रयोगदर्शनाच्च भौवादिकोऽप्येवभूतो वैदिकः कश्चिद्धातुरस्तीत्यभ्युपगम्यत इति न दोषः । एवमेव माध्यन्दिनपाठे दृश्यमानस्य 'अर्शत्' इति रूपस्यापि 'ऋशी गतौ' इति भौवादिकधातुसद्भावमाश्रित्य निर्वाहो बोध्यः । **एनत्** - पूर्वोक्त परमात्माख्यमेकमात्मवस्तु, **नाप्नुवन्** - न प्राप्नुवन्ति - प्राप्तुं न शक्नुवन्तीत्यर्थः । 'छन्दसि लुङ् लङ् लिटः' ॥ ३ ॥ ४ ॥ ६ ॥ इत्यनुशासनेन लडर्थे लङ् । **तत्** - पूर्वोक्तमेकमात्मवस्तु, **धावतः**-प्रागेव धावतः, **अन्यान्** - प्रागुक्तान् ब्रह्मादिदेवान् ,**तिष्ठत्** - तद्धावनानन्तरं चिर तिष्ठदपि, **अत्येति**-पश्चात्क्षणेनैव स्ववेगशक्त्याऽतिक्रामति ॥

तथा चेदमुक्त भवति—आत्मानोऽनन्तास्सन्ति; तत्रैकस्तावदात्मा सकलेतरव्यावृत्तनिरतिशयवेगशक्तिशाली ; यतः, - इतर आत्मानस्स्वदेशात्किञ्चित्पूर्वं गच्छन्तमेतं स्वयं पश्चाद्धावन्तोऽपि प्राप्तुमेव न शक्नुवन्ति ; किमुतातिक्रमितुम् , अयं पुनरात्मा स्वदेशात्पूर्वमेव धावतोऽन्यांस्तद्गमनात्पश्चात्स्वयं स्वदेशे चिरं तिष्ठन्नपि ततः क्षणेनैव स्ववेगशक्त्याऽतिक्रम्य गच्छति—इति। अथास्यात्मनो निखिलजगद्धारकत्वशक्तिं तन्मुखेन कारणत्वञ्चाह—**तस्मिन्नप** इत्यादिना । **मातरिश्वा** मातरि-अन्तरिक्षे श्वयति गच्छतीति मातरिश्वा निरालम्बे नभस्येकत्रावस्थानरहितस्सततगमनशीलस्स्वयं स्थूल-

---

१. चुरा. वा ॥

**तदेजति तद्वु नैजति तद्दूरे तद्वन्तिके ।**
**तदन्तरस्य सर्वस्य तदु सर्वस्यास्य बाह्यतः ॥ ५**

वे॥'अनेजदेकं मनसो जवीयः' इत्युक्तमर्थमादरान्मुखान्तरेणानुशास्ति-**तदेजति तदु नैजतीति** । तत् - व्याप्तं तत्त्वं पूर्वोक्तप्रकारेण जवीयस्त्वादिना एजति-कम्पते । कम्पत इवेत्यर्थः । **तदु नैजति-**

कू॥अथेदानीमाचार्यः स्वोपदिष्टं विचित्रशक्तित्वमेवादरार्थं मुखान्तरेण पुनरनुशास्ति—**तदेज तीति** । भूयोभूयःप्रवचनं श्रवणं च कर्तव्यमिति च पुनरनुशासनस्याभिप्रायः । तथा च शास्त्रं 'परी-

श्री॥गुरुद्रव्यानात्मकतया स्थूलगुरुद्रव्यान्तरधारणशक्तिगन्धसम्भावनानर्हो वायुरपीत्यर्थः। **तस्मिन्**-यथोक्तलक्षणैकात्मनि, अपः निखिलजगदण्डमण्डलकारणत्वेनादिसृष्टस्थूलगुरुद्रव्यरूपाणि तदाधारत्वेन समन्ततस्तदावरणत्वेन च स्थूलगुरुद्रव्यान्तरावष्टम्भलेशमन्तरेणैवावतिष्ठमानानि कारणोदकानि; **दधाति** - धारयति । 'प्रासादशिखरे चैत्रो ध्वजं धारयति' इत्यत्र चैत्रः प्रासादशिखरोपष्टब्धस्सन्नेव ध्वजं धारयतीतिवत्, 'तस्मिन्नपो मातरिश्वा दधाति' इत्यत्र परमात्मोपष्टब्धस्सन्नेव मातरिश्वा कारणोदकानि दधातीत्यर्थोऽनेन लभ्यत इति बोध्यम् ॥ २ ॥ सविवरोदरतया स्वेषु प्लवमानानां निखिलजगदण्डमण्डलानामाधारभूतान्यादिसृष्टानि कारणजलानि स्थूलगुरुद्रव्यान्तरोपष्टम्भमन्तरेण निरालम्बे नभसि केवलपरमात्मशक्त्युपष्टब्धवातोत्तम्भितान्येव ह्यवतिष्ठन्ते ॥ ३ ॥ उक्तं हि मनुना जगत्कारणतया स्थूलगुरुद्रव्यान्तरापेक्षया प्रथमसृष्टत्वमपामेव प्रथमाध्याये 'सोऽभिध्याय शरीरात्स्वात्सिसृक्षुर्विविधाः प्रजाः । अप एव ससर्जादौ तासु वीर्यमवासृजत् ॥ ८ ॥ तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् । तस्मिन् जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः' ॥ ९॥इति॥४॥ विष्णुपुराणे प्रथमांशे द्वितीयाध्याये'तत्क्रमेण विवृद्धं सजलबुद्बुदवत्समम्। भूतेभ्योऽण्डम्महाबुद्धे महत्तदुदकेशयम्' ॥ ५५ ॥ इति कारणोदकाधारकत्वमण्डस्योक्तम् ॥ ५ ॥ एवं तत्रैव 'वारिवह्न्यनिलाकाशैस्ततो भूतादिना बहिः । वृतं दशगुणैरण्डं भूतादिर्महता तथा' ॥ ५९ ॥ इति कारणजलाद्यावरणावृतत्वमण्डस्याभिहितम् ॥ ६ ॥ तथा च, अनन्तेष्वात्मस्वेक आत्मा स्वेतरसर्वातिशायिमहिमा जगत्कारणभूतश्चेति प्रतिपादयताऽनेन मन्त्रेण प्रागीदृक्छब्देन निर्दिष्टस्य परमात्मनस्स्वेतरसर्वनियन्तृत्वादिकमुपपादितं भवति ॥ ७ ॥ शङ्करकृतमेतद्व्याख्यानमक्षराननुगुणमापण्डितपामरातिस्फुटप्रतीयमानार्थप्रहाणेन स्वमताभिनिवेशमात्रेण बलाद्यथेष्टविपरीतार्थकल्पनेन चासमञ्जसञ्चेति, अन्येषां केषाञ्चिद्व्याख्यानमपि शब्दस्वारस्याननुगुणमिति च विलोकयतां विदुषां स्वत एव विशदं भवतीति तदुपपादनमुपेक्षामहे ग्रन्थगौरवभयात् ॥ ८ ॥ इति चतुर्थमन्त्रव्याख्यानम् ॥ ४ ॥

पुनरपि तस्यैव परमात्मनो विभुत्वादिलक्षणम्महिमान्तरमाह --**तदेजतीत्यादिना** पञ्चमेन मन्त्रेण ॥ १ ॥

अस्य पदविवरणम्—**तत्** पूर्वोक्तं परमात्मलक्षणमेकमात्मवस्तु, **एजति**-आश्रितकार्यार्थं तत इतो गमनेन चलत्यपि, **तदु** - तदेव उकारोऽवधारणार्थः, माध्यन्दिनानान्तु 'तन्नैजति' इत्येव पाठो दृश्यते, **नैजति** - न चलत्यपि। कथमेकस्य विरुद्धधर्मद्वयसम्भव इति चेत्, विग्रहविशिष्टवेषेण चलनं स्वरूपतश्चलनाभावश्च सम्भवतीति न विरोधः। परमात्मस्वरूपस्य विभुत्वेन तस्य चलनं हि न

१. १-२ ॥

वे॥तदेव वस्तुवृत्त्या न कम्पते।**तद्दूरे तद्वन्तिके**- तद्दूरेऽन्तिके च वर्तते।मूढप्रतिबुद्धपुरुषभेदापेक्षया विभोरेव दूरान्तिकवर्तित्वव्यपदेशः। यथाह शौनकः 'पराङ्मुखानां गोविन्दे विषयासक्तचेतसाम्। तेषां तत्परम ब्रह्म दूराद्दूरतरे स्थितम्॥ तन्मयत्वेन गोविन्दे ये नरा न्यस्तचेतसः। विषयत्यागिनस्ते षां विज्ञेयं च तदन्तिके' इति। केचित्पदार्थाः कस्यचिदन्तर्भवन्ति, न बहिः। केचिद्बहिर्भवन्ति, नान्तः। तदुभयव्यावृत्तिमाह—**तदन्तरस्य सर्वस्य तदु सर्वस्यास्य बाह्यत** इति। तत् सर्वव्याप्तमुक्तं परं ब्रह्म। अस्य - विचित्रचिदचिद्रूपेण प्रमाणसिद्धस्य सर्वस्य वस्तुनः। अन्तर्भवति-अप्रतिघातादविभक्तदेशं वर्तत इत्यर्थः। तदेव सर्वस्यास्य बहिरपि भवति। परिमितानां पदार्थाना भावदेश इवाभावदेशेऽपि वर्तत इति यावत्। तदेतद्व्यक्तमुक्त तैत्तिरीये सर्वपराविद्योपास्यविशेष-

कू॥क्ष्य लाकान् कर्मचितान्ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन।तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिश्श्रोत्रियं ब्रह्मनिष्ठम्। तस्मै स विद्वानुपसन्नाय सम्यक्प्रशान्तचित्ताय शमान्विताय। येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्' इति। तत्त्वतः - अज्ञानसंशयविपर्ययनिरासो यथा भवति तथा,प्रोवाच - प्रकर्षेण ब्रूयात्-पुनःपुनरुपदिशेदित्यर्थः। अत एव 'तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया' इत्यादिभगवतोपदिष्टस्याप्यर्थस्य वैशद्याय तत्त्वदर्शिसकाशात्प्रणिपातादिपुरस्सरं पुनःपुनश्श्रवणं विहितम्। उपदिष्टाच पुनरनुगीतेत्याहुराचार्याः। **तदेजति**—तत् - सर्वव्याप्त परं ब्रह्म, एजतीव कम्पत इव, जवीय एवेति यावत्। **तदु** तदेव,**नैजति**-वस्तुतस्तु न कम्पते। तद्दूरे च, तदेवान्तिके च वर्तते। असुरदैवप्रकृतिकपुरुषभेदापेक्षया विभोरेव दूरान्तिकवर्तित्वव्यपदेशः। आह च भगवाञ्शौनकः 'पराङ्मुखानां गोविन्दे विषयासक्तचेतसाम्। तेषां तत्परमं ब्रह्म दूराद्दूरतरे स्थितम्॥ तन्मयत्वेन गोविन्दे ये नरा न्यस्तचेतसः। विषयत्यागिनस्तेषां विज्ञेयं च तदन्तिके' इति। इदमप्येकं वैचित्र्यमित्याह—**तत्**-सर्वव्याप्तं परं ब्रह्म,**अस्य सर्वस्य**-विविधविचित्ररूपतया प्रमाणप्रसिद्धस्य सर्वस्य वस्तुनोऽन्तर्भवति, तदेव पुनस्तदानीमेव सर्वस्य बहिरपि भवतीत्यर्थः। अन्येषां तु गृहान्तर्वर्तिपुरुषाणा तदानीमेव न बहिष्ठत्वं सम्भवति, बहिर्वसनाञ्च नान्तर्वर्तित्वमितीह वैचित्र्यमिति भावः। यद्यप्यणुषु नान्तर्वर्तिता सम्भवति, तथाप्यप्रतिघातादविभक्तदेशतया वर्तित्वमात्रेणाणुष्वन्तर्वर्तित्वो-

श्री॥सम्भवति, तथाऽपि'कृष्णो बृन्दावनं गच्छति,मथुरां गमिष्यति'इत्यादिव्यवहाराणां विग्रहविशिष्टवेषविषयाणां दर्शनेन विशिष्टिवेषेण चलनमपि सम्भवति। यद्वा—आश्रितजनदुःखप्रसङ्गभयनिबन्धनं कम्पनं, नियन्त्रन्तरदण्डभयनिबन्धनकम्पनाभावश्च विवक्षित इति न विरोधः। अनेनाश्रितजनपरमकारुणिकत्वमनन्याधीनत्वञ्चेति गुणद्वयं प्रतिपादितं भवति। **तत्, दूरे**- अतिविप्रकृष्टदेशेऽप्यस्ति, **तदु**-तदेव, **अन्तिके** समीपेऽप्यस्ति, **तत्, अस्य सर्वस्य** - चिदचिल्लक्षणस्य कृत्स्नस्य वस्तुजातस्य,**अन्तः** अन्तरप्यस्ति; **तदु**-तदेव, **सर्वस्यास्य बाह्यतः**-बहिःप्रदेशेऽप्यस्ति विभुत्वात्सर्वत्रास्तीत्यर्थः। 'तद्दूरे तद्वन्तिके' इत्यनेन 'पराङ्मुखानां गोविन्दे विषयासक्तचेतसाम्। तेषां तत्परमं ब्रह्म दूराद्दूरतरे स्थितम्॥१३॥ तन्मयत्वेन गोविन्दे ये नरा न्यस्तचेतसः। विषयत्यागिनस्तेषां विज्ञेयञ्च तदन्तिके' इति शौनकवचनोक्तं, अनाश्रितजनानां दुर्ग्रहत्वलक्षणा दूरस्थितिः, आश्रितजनानां सुग्रहत्वलक्षणा समीपस्थितिश्चेत्युभयं वा विवक्षितम्। अनेनच भक्तजनसौलभ्यमभक्तजनदौर्लभ्यञ्चेति

१. विष्णुधर्मे. ९९-१४॥

वे॥निर्धारणार्थे 'सहस्रशीर्षम्' इत्यनुवाके 'यच्च किञ्चिज्जगत्यस्मिन् दृश्यते श्रूयतेऽपि वा। अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः' इति ॥ ५ ॥

---

कू॥कि:। एव बहिर्व्याप्तिरपि अविभुद्रव्यापेक्षयैव, न तु विभुद्रव्यापेक्षयापीति द्रष्टव्यम्। तदिदं वैचित्र्यं तैत्तिरीयकेऽप्युक्तम् 'अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः' इति ॥ ५ ॥

---

श्री॥गुणद्वय भगवतः प्रतिपादितं भवतीति बोध्यम् ॥ २ ॥ 'तदेजति' इत्यत्र, एजतीवेतीवकाराध्याहारगर्भमन्यैः कृतं व्याख्यानमनुपादेय, विभोः परमात्मनस्स्वरूपतश्चलनाश्रयत्वासम्भवेऽपि विशेषणीभूतविग्रहद्वारा गमनाभिप्रायेण, एजतीतिव्यवहारस्य 'कृष्णो मधुरां गच्छति, द्वारका गच्छति' इत्यादिव्यवहारवन्निर्वाहसम्भवेनेवकाराध्याहारस्यानावश्यकत्वात् ॥ ३ ॥

यदप्याहुरत्रोत्तरकलाख्याः—अणुद्रव्यविषयेऽन्तर्व्याप्तेर्विभुद्रव्यविषये बहिर्व्याप्तेश्च दुर्वचतयाऽन्तर्व्याप्तिवचनमणुद्रव्यविषयेऽप्रतिघातादविभक्तदेशं वर्तमानत्वमात्रविषयम्, बहिर्व्याप्तिवचनन्तु विभुभिन्नपरिमितद्रव्यमात्रविषयम्– इति ॥ ४ ॥

अत्रोच्यते ॥ ५ ॥ इह तावदणुद्रव्यवाचकं पदमेकं, तदितरद्रव्यवाचक पदमन्यदिति पदद्वयं नोपलभ्यते ॥ ६ ॥ यतोऽणुद्रव्यान्वितान्तःपदस्यैकार्थकत्वम्, इतरद्रव्यान्वितान्तःपदस्यान्यार्थकत्वञ्च सुवच स्यात् ॥ ७ ॥ किंत्विह 'सर्वस्यास्य' इत्येकमेव पद सर्वद्रव्यवाचकमन्तःपदान्वय्यस्ति॥८॥ अतस्तत्पदप्रतिपाद्यसर्वद्रव्यान्वययोग्यैकविधार्थकताया एवान्तःपदस्य वक्तव्यत्वेनान्तर्वर्तित्वोक्तेरणुद्रव्यविषये परम् अप्रतिघातादविभक्तदेशतया वर्तमानत्वाभिप्रायकताया अन्यद्रव्यविषयेऽन्यादृशाभिप्रायकतायाश्च वर्णनमसम्बद्धमेव ॥ ९ ॥ एवम् अप्रतिघातादविभक्तदेशतया वर्तमानत्वमनवच्छिन्नवृत्तिमत्त्वपर्यवसन्नं तत्तद्वस्तुसम्बन्धिसर्वप्रदेशसम्बन्धित्वमेवेति तादृशस्य तस्याणुतद्भिन्नसर्वद्रव्यविपय एव परमात्मनि सम्भवादपि तथा वर्णनमनावश्यकम् ॥ १० ॥ अपि च—अन्तर्वर्तित्वस्योक्तलक्षणानवच्छिन्नवृत्तिमत्त्वरूपत्वे सर्वद्व्यसर्वप्रदेशसम्बन्धिताया इह वाक्यद्वयप्रतिपादयिषिताया: 'तदन्तरस्य सर्वस्य' इत्येकवाक्येनैव सिद्ध्या 'तदु सर्वस्यास्य बाह्यतः' इति वाक्यान्तरं निरर्थकमेव स्यात् ॥ ११ ॥ किञ्च 'तदु सर्वस्यास्य बाह्यतः' इति वाक्यस्य स्वरसतः प्रतीयमानस्वभिन्नसर्वद्रव्यविषयकत्वभङ्गप्रसङ्गदोषमगणयित्वा विभुभिन्नसर्वद्रव्यविषयकत्वेन सङ्कोचं सहमानैः 'तदन्तरस्य सर्वस्य' इति पूर्ववाक्यस्याप्यणुभिन्नसर्वद्रव्यविषयकत्वेन सङ्कोचस्वीकारसम्भवेन 'अन्तः' इत्यस्य यथाश्रुतार्थप्रहाणस्यैवानावश्यकत्वेन वाक्यान्तरवैयर्थ्यापादकोऽन्यादृशार्थः किमर्थं कल्पित इति तु न जानीमः॥ १२॥

एवमत्र परमात्मनः स्वभिन्नयावद्द्रव्येष्वन्तर्व्याप्तेर्बहिर्व्याप्तेश्च पृथक्पृथक्सर्वशब्दघटितेन वाक्यद्वयेन स्वरसतः प्रतिपद्यमानत्वात्, श्रौतस्यार्थस्य यथाश्रुत्यैव प्रतिपत्तव्यत्वात्, 'न हि वचनविरोधे न्यायः प्रभवति' इति न्यायेन प्रस्फुटार्थकवचनविरोधेन न्यायप्रचारायोगाच्च, कतिपयद्रव्येष्वन्तर्व्याप्तेः कतिपयद्रव्येषु बहिर्व्याप्तेश्चासम्भवम्मत्वा श्रुतेस्स्वतर्कानुरोधेन स्वैर सङ्कोचकल्पनमप्येतेषामयुक्तमेव ॥ १३ ॥ 'यच्च किञ्चिज्जगत्यस्मिन् दृश्यते श्रूयतेऽपि वा। अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः' इति सम्प्रतिपन्नसमानार्थकनारायणानुवाकगतश्रुत्यन्तरमपीदृशसङ्कोचकल्पनं निरुणद्धि ॥ १४ ॥ अत्र हि 'तत्सर्वम्' इत्येकशब्दप्रतिपन्नस्यैवार्थस्यान्तर्बहिर्व्याप्तिकर्मतयाऽन्वयात् 'तत्सर्वम्' इत्यस्य 'यच्च किञ्चित्' इत्यादिपूर्ववाक्यप्रतिपन्नसर्वार्थपरामर्शिनः कतिपयद्रव्यभिन्नद्रव्यविषयकत्वेन सङ्कोचकल्पनासम्भवात्; तथा सङ्कोचस्वीकारे च कतिपयद्रव्येषु व्याप्तेरेव परमात्मनोऽसिद्धिप्रसङ्गात्, द्वयोरेतयोश्श्रुत्योस्सर्वसम्प्रतिपन्नसमानार्थकताव्याहतिप्रसङ्गाच्च

---

१. तै. ना १०·१ ॥

श्री॥दर्शितश्रुतेर्यथोक्तरीत्या सङ्कोचकल्पनं नैव सङ्घटीति॥१५॥ तस्मात्स्वरसतः प्रस्फुटं श्रुतिप्रतिपन्नं स्वभिन्नयावद्द्रव्येष्वन्तर्बहिर्व्याप्तिमत्त्वं परमात्मनोऽस्तीत्येवाभ्युपगन्तव्यमिति प्रागुक्तलक्षणार्थान्तरसङ्कोचादिकल्पनमेतेषामनुपपन्नमेव ॥ १६ ॥ 'य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति स त आत्माऽन्तर्याम्यमृतः'[1] इत्यन्तर्यामिब्राह्मणश्रुतिश्चाणुभूते प्रत्यगात्मन्यन्तःप्रविश्य नियन्तृतयाऽवस्थितं परमात्मानं प्रति शरीरतां प्रतिपादयन्ती परमात्मनोऽणुष्वन्तर्व्याप्त्यसम्भववादमसमञ्जसमतिस्फुटमेवावेदयति॥१७॥ अत्र हि 'य आत्मनि तिष्ठन्' इति पूर्वमभिधाय पश्चात् 'आत्मनोऽन्तरः' इति पुनरभिधानं परमात्मनः प्रत्यगात्मनि बहिर्व्याप्तिमात्रशङ्काव्युदासार्थमित्यापण्डितपामरं प्रस्फुटम् ॥ १८ ॥ अत्र परमात्मनः प्रत्यगात्मन्यन्तःप्रविश्य नियन्तृतयाऽवस्थितत्वं प्रतिपाद्य प्रत्यगात्मपरमात्मनोश्शरीरशरीरिभावोपपादनादपि परमात्मनोऽणुभूतप्रत्यगात्मन्यन्तर्व्याप्तिर्दुरपह्नवा ॥ १९ ॥ न हि बहिरेवावस्थितं कञ्चित्प्रति किञ्चिद्द्रव्यं शरीरं भवितुमर्हति ;—तथा सति बहिरेवावस्थाय नियन्तारं राजानं प्रति राष्ट्रस्यापि शरीरत्वव्यपदेशप्रसङ्गात् ॥ २० ॥ तदिदं सर्वमभिसन्धायोक्तं व्यासार्यैरेतां श्रुतिं व्याकुर्वद्भिः 'आत्मनि तिष्ठन्' इत्युक्ते 'वेद्यामग्निस्तिष्ठति' 'तिले तैलं तिष्ठति' इतिवद्बहिरबहिस्स्थितिसाधारण्यात्तद्वैशद्यार्थमाह—आत्मनोऽन्तर इति । 'अन्तरो यमयति' इत्यनेन शरीरलक्षणमुक्तम्' इति ॥ २१ ॥ उक्तञ्च तैरेव 'अन्तः प्रविष्टश्शास्ता जनानां सर्वात्मा' इति श्रुतिं व्याकुर्वद्भिः - 'अन्तःप्रविष्टश्शास्ता' इत्येतत्सर्वात्मशब्दव्याख्यानरूपम् , अनेन शरीरात्मभाव उक्तः,अन्तः प्रविश्य नियाम्यत्वं हि शरीरत्वम्'[2] इति॥२२॥एवं'यच्च किञ्चित्' इत्याद्युदाहृतश्रुतिप्रतिपन्नां परमात्मनस्स्वेतरसर्वद्रव्येष्वन्तर्बहिश्च व्याप्तिमुपपादयितुं प्रवृत्तया 'अणोरणीयान्महतो महीयान्' ॥ क ॥ २ ॥ २० ॥ तै ॥ ६ ॥ १० ॥ १ ॥ इति श्रुत्या परमात्मनस्स्वेतरसर्वसूक्ष्मद्रव्यापेक्षया सूक्ष्मतमत्वस्य तदन्तर्व्याप्तिप्रयोजकस्य स्वेतरमहाद्रव्यापेक्षया महत्तमत्वस्य च तद्बहिर्व्याप्तिप्रयोजकस्य प्रतिपादनमुखेन स्वेतरेषु सर्वेषु सूक्ष्मेषु महत्सु च द्रव्येष्वन्तर्बहिर्व्याप्तियोग्यताया एव प्रतिपादनात्परमात्मनस्स्वेतरेषु सर्वेषु द्रव्येष्वन्तर्बहिर्व्याप्तिर्निराबाधैव प्रतिपद्यते ॥ २३ ॥ न च निरवयवेष्वणुद्रव्यभूतेषु प्रत्यगात्मसु कथमन्तर्व्याप्तिः परमात्मनस्सम्भवति? - अन्तःप्रवेशप्रयोजकविवराभावादिति वाच्यम् , इतरवस्तुप्रवेशप्रयोजकविवराभावेऽपि प्रमाणबलेन परमात्मप्रवेशप्रयोजकविवरस्वीकारे क्षत्यभावात्॥ २४॥ यथा हि दर्पणादिस्वच्छद्रव्येषु पृथिवीजलादीतरवस्तुप्रवेशप्रयोजकविवरानङ्गीकारेऽपि सूर्याद्यालोकप्रवेशप्रयोजकविवरम्,अयःपिण्डे वस्त्वन्तरप्रवेशप्रयोजकविवरानङ्गीकारेऽप्यग्निप्रवेशप्रयोजकविवरञ्च प्रत्यक्षप्रमाणबलेनाङ्गीक्रियते:-तथैव प्रत्यगात्मस्वपि प्रमाणबलेन परमात्मप्रवेशप्रयोजकविवरस्वीकारे हि न काचिदस्ति क्षतिः ॥ २५ ॥ न चैतावता प्रत्यगात्मनां छेदभेदादिप्रसङ्गः,दर्पणादिद्रव्येष्वालोकादिप्रवेशतश्छेदाद्यसम्भववदेवोपपत्तेः॥ २६ ॥ तस्मात् सूर्याद्यालोकस्स्वव्याप्त्यप्रतिघातेन स्वच्छद्रव्याण्यन्तर्बहिश्च व्याप्यावतिष्ठते ; नच तावता तेषां काचिदस्ति क्षतिरिति यथा प्रत्यक्षप्रमाणबलादङ्गीक्रियते ; तथैव परमात्मापि स्वव्याप्त्यप्रतिघातेन प्रत्यगात्मनोऽन्तर्बहिश्च व्याप्यावतिष्ठते ; न च तावता तेषां नियतादिक्षतिरिति श्रुतिबलादङ्गीक्रियत इति न कश्चिद्दोषः ॥ २७ ॥ किं बहुना, प्रत्यगात्मना परमात्मव्याप्तिप्रतिघातकत्वस्वीकारे विभौ परमात्मनि छिद्रकरणं विना क्वचिदप्यवस्थानस्यैवासम्भवेन ते तस्मिन् प्रतिक्षणं छिद्रं कुर्वन्त एव तिष्ठन्ति ; तत इत-

१. शतपथब्राह्मणे. १४-५-३० ॥
२. श्रुतप्रकाशिकायां - महासिद्धान्ते ॥
३. यजुषि. आरण्यके. ३-११-२० ॥
४. श्रुत. प्र. महा ॥

श्री॥स्सञ्चरन्ति चेत्यभ्युपगमस्यावश्यकतया परमात्मस्वरूपस्य च्छेदभेदादिप्रसङ्गो हि दुर्निवारस्स्यादि-
त्यवधीयताम्॥२८॥ किञ्च, निरवयवत्वहेतुना प्रत्यगात्मना परमात्मनस्स्वान्तःप्रवेशप्रतिघातकत्वे तेनैव
हेतुना परमात्मनोऽप्यन्येषां स्वान्तःप्रवेशप्रतिघातकताया दुर्वारतया परमात्मनि वाऽन्येषां कथमन्त
रवस्थानसम्भवः ॥ २९ ॥ तस्मात्, यथा मणिदीपादिप्रभाणां बहूनामेकत्र प्रवृत्तानां परस्परव्याप्त्य-
प्रतिघातकतया परस्परान्तःप्रवेशः प्रत्यक्षप्रमाणसिद्धः, यथा च स्वाम्रास्वाम्रपदार्थानामेकत्र प्रसक्ताना
परस्परान्तःप्रवेशो दुरपह्नवः, यथा च कालदिगात्मनां विभुत्वेनाभ्युपगतानां परस्पराप्रतिघातेनैव सर्वत्र
व्याप्तिर्नैयायिकादिसिद्धा, यथा चात्यल्पपरिमाणे वटपल्लवशायिनि भगवति निखिलजगदण्डमण्डल-
स्यान्तःस्थितिश्च प्रमाणसिद्धा; तथैव प्रत्यगात्मान्तर्नियन्तृतया परमात्मनः स्थितिः परमात्मान्तरन्येषा
तदायत्ततयैव स्थितिश्च श्रुत्यादिप्रमाणबलेनैव दुरपह्नवा सिध्यतीति निरवयवत्वमात्रेणान्तरिस्थित्यसम्भ-
ववर्णनमप्रतिष्ठितकेवलकुतर्कमात्रमूलमेवेति न किञ्चिदेतत् ॥ ३० ॥ अथैवमपि विभुद्रव्याणा देश-
परिच्छेदरहितत्वेन तद्बहिर्देशसद्भावस्यैव दुर्वचतया कथ तद्बहिर्व्याप्तिः परमात्मनस्सुवचेति चेन्न-'मह-
तो महीयान्' इति श्रुत्या स्वेतरसर्वमहाद्रव्यापेक्षया परमात्मनो महीयस्त्वप्रतिपादनेन तद्विरोधेन क-
स्यापि द्रव्यस्य परमात्मसमानमहत्त्वासिद्धेस्तदपकृष्टमहत्त्वेभ्यो द्रव्येभ्यः परमात्मनो बहिर्व्याप्तिसम्भवे
क्षतिविरहात् ॥ ३१ ॥ अत एव गीतासु 'अथवा बहुनैतेन कि ज्ञानेन तवार्जुन । विष्टभ्याहमिदं
कृत्स्नमेकांशेन स्थितो जगत्' ॥ ४२ ॥ इति दशमाध्यायवचनेन, 'इहैकस्थं जगत्कृत्स्नं पश्याद्य सच-
राचरम् । मम देहे गुडाकेश यच्चान्यद्द्रष्टुमिच्छसि ॥ ७ ॥ तत्रैकस्थं जगत्कृत्स्नं प्रविभक्तमनेकधा ।
अपश्यद्देवदेवस्य शरीरे पाण्डवस्तदा' ॥ १३ ॥ इत्येकादशाध्यायवचनाभ्यां, 'यस्यायुतायुतांशांशे
विश्वशक्तिरियं स्थिता । परब्रह्मस्वरूपस्य प्रणमामस्तमव्ययम्' ॥ ५३ ॥ इति श्रीविष्णुपुराणप्रथमांश-
नवमाध्यायवचनेन च सचराचरस्य कृत्स्नस्य जगतो भगवत्येकदेश एव परिसमाप्तत्वं प्रस्फुटमेवाभि-
हितम् ॥ ३२ ॥ भगवतोऽपकृष्टपरिमाणानामेव कतिपयद्रव्याणा विभुत्वव्यवहारस्तु भगवदितरकतिप-
यमहाद्रव्यापेक्षयापकृष्टपरिमाणराहित्यमात्रनिबन्धनः ॥ ३३ ॥ अथ किं तावत्तादृशं विभुद्रव्य ?
यद्बहिर्व्याप्तिर्ब्रह्मणो न सम्भवतीत्युच्यत इति विवेचयामः ॥ ३४ ॥ न तावदाकाशस्तथा - वेदान्त-
सिद्धान्ते तस्य प्राकृततत्त्वरूपतया महदादिभ्योऽप्यपकृष्टपरिमाणस्यापरिच्छिन्नत्वशङ्कागन्धानवका-
शात् ॥ ३५ ॥ नापि शुद्धसत्त्वमिश्रसत्त्वद्रव्ये तथा - तयोः परस्परदेशव्यावृत्तत्वात् ॥ ३६ ॥ नापि
नित्यमुक्तधर्मभूतज्ञानानि तथा - तेषा सङ्कोचविकासशीलतया कदाचित्सङ्कोच्यावस्थापनस्यापि सम्भ-
वेन तद्बहिःप्रदेशस्यापि सूपपादत्वात् ॥ ३७ ॥ नापि कालस्तथा-सचराचरस्य कृत्स्नस्य जगतो भग-
वत्स्वरूपैकदेश एव परिसमाप्ततायाः प्रागुदाहृतप्रमाणसिद्धतया तदन्तःपातिकार्योपयोगितयैव कृतस्या-
स्य तद्बहिस्सद्भावे प्रमाणाभावेन परिच्छिन्नताया दुरपह्नवत्वात् ॥ ३८ ॥ किञ्च - 'कालो लीलाविभू-
तावनित्यः, त्रिपाद्विभूतौ नित्यः' इत्यप्यङ्गीकारदर्शनेन नित्यत्वानित्यत्वयोर्विरुद्धयो रेकत्रासम्भवेन पर-
स्परविभिन्नयोर्द्वयोः कालयोः परस्परदेशव्यावृत्तयोरेव सिद्ध्या तयोः परिच्छिन्नता हि दुरपह्नवा ॥
३९ ॥ किं बहुना, परमात्मनस्स्वेतरसर्वमहाद्रव्यापेक्षया महीयस्त्वस्य परमात्मैकदेश एव सचराच-
रस्य कृत्स्नस्य जगतः परिसमाप्ततायाश्च प्रागुदाहृतानन्यथासिद्धप्रमाणसिद्धतया तद्विरोधेन भगवदि-
तरस्य कस्यापि द्रव्यस्य भगवत्समपरिमाणत्वं न सिध्यत्येवेति स्वेतरसर्वद्रव्यापेक्षया परमात्मनो बहि-
र्व्याप्तिरपि सूपपादैव ॥ ४० ॥ एवमेव परमात्मनस्स्वेतरसर्वाणुद्रव्यापेक्षयाऽणीयस्त्वस्य प्रत्यगात्मान्त-
र्यामित्वस्य च प्रागुदाहृतप्रमाणसिद्धतया तस्य प्रत्यगात्मान्तर्व्याप्तिरपि दुरपह्नवैव ॥ ४१ ॥ नहि खलु
कस्मिंश्चिद्वस्तुनि बहिर्मात्रसंबद्धं किञ्चिद्वस्तु तदन्तर्यामित्वेनानुन्मत्तः कश्चिद्व्यपदिशेत् ॥ ४२ ॥

श्री॥अथान्तःप्रदेशाभावेऽन्तर्व्याप्तिर्न सुवचा ; तत्स्वीकारे च प्रत्यगात्मना सावयवत्वप्रसङ्गः ; तत्स्वीकारेचानित्यत्वप्रसङ्गो दुर्वार इति चेत् ॥ ४३ ॥ इदं चोद्यं परमात्मन्यपि समान , परमात्मन्य प्यन्तःप्रदेशसत्त्व एव तदन्तरितरेषा वस्तूनां स्थितिस्सुवचा ; तत्स्वीकारे च तस्यापि सावयवत्वं प्रसज्यते , तत्स्वीकारे चानित्यत्वप्रसङ्गोऽपीति॥ ४४ ॥ किं बहुना कृत्स्नप्रसक्त्यधिकरणे ब्रह्मणो निरवय वत्वे बहुभवनं कार्यत्वानुपयुक्ताशस्थितिश्च नोपपद्यते ; सावयवत्वे च निरवयवत्वश्रुतिविरोध इति चोद्यं 'श्रुतेस्तु शब्दमूलत्वात्' ॥ २ ॥ १ ॥ २७ ॥ इति सूत्रे श्रुत्या ब्रह्मणो निरवयवत्वस्य तत एव विचित्रसर्गस्यच प्रतिपादनात्, श्रौतस्यार्थस्य यथाश्रुत्येव प्रतिपत्तव्यत्वाच्च, ब्रह्मणश्शब्दैकप्रमाणकत्वेन धर्मिग्राहकप्रमाणेन यादृशस्वभावं तत्प्रतिपद्यते , तादृशस्वभावमेव तत्स्वीकर्तव्यमिति न तत्र लोकदृष्टविरोधशङ्कावकाश इति सूत्रकारो यथा पर्यहार्षीत् ॥ ४५ ॥ तथेहापि परमात्मप्रत्यगात्मनां निरवयवत्वनित्यत्वयोः परमात्मनस्स्वेतरसर्वद्रव्यान्तर्बहिर्व्याप्ततायाः कृत्स्नस्य जगतः परमात्मान्तरेवावस्थिततायाश्च श्रुत्यैव प्रतिपादनाच्छ्रुत्यैकसमधिगतस्यार्थस्य यथाश्रुत्येव प्रतिपत्तव्यत्वाच्च लोकदृष्टन्यायेन न विरोधशङ्कावकाश इति चोद्यपरिहारस्सुकर एव ॥ ४६ ॥ इह विपरीतार्थकरणेन श्रुतेरन्यथानयने च तत्रापि श्रुतेरन्यथानयनं प्रसज्यत इति सूत्रकारोक्तान्यादृशसमाधानं निरर्थकमेव स्यात् ॥ ४७ ॥ स्पष्टार्थकश्रुतेरन्यथानयनमसङ्गतमिति सूत्रकारस्तथा समादधाविति चेदिहापि तत्तुल्यं ब्रह्मणस्स्वेतरसर्वद्रव्येष्वविशेषेणान्तर्बहिर्व्याप्ततायास्समन्ततः प्रस्फुटमेव जोघुष्यमाणत्वात् ॥ ४८ ॥

इदं पुनरत्रावधेयम् - अन्तश्शब्दो हि नानांशमध्यावकाशपरः ॥ १ ॥ इत्थञ्च परमात्मनो जीवात्मान्तःप्रवेशप्रतिपादकश्रुतिबलाज्जीवात्मनामणुस्वरूपाणामपि नानांशात्मकत्वं तन्मध्ये परमात्मप्रवेशयोग्यावकाशश्चास्तीत्येवाभ्युपगन्तव्य - श्रौतस्यार्थस्य यथाश्रुत्येव प्रतिपत्तव्यत्वात्॥ २ ॥ न च तावताऽनित्यत्वापादकसावयवत्वप्रसङ्गः,वस्तुस्वरूपारम्भकानेकाशात्मकत्वस्यैव तथाविधसावयवत्वरूपत्वेनानादिसिद्धानेकाशात्मकत्वस्य तथात्वासम्भवात्॥३॥ईदृशं विचित्रमनेकांशात्मकत्वमेव लोके क्वाप्यदृष्टमपि श्रुतिप्रमाणैकबलादिहाङ्गीक्रियते ॥ ४ ॥ यथा निरवयवस्यैकस्य ब्रह्मणो बहुभवनं, चेतनाचेतनादिलक्षणविचित्रकार्योपादानत्वं, कार्यत्वानुपयुक्तांशस्थितिः, जातिवादिपक्ष एकस्या एव जातिव्यक्तेरिव युगपदनेकत्र परिपूर्णस्थितिश्चेत्येवमादयोंशाः श्रुतिप्रामाण्यबलाद्विचित्रशक्तियोगसम्भवाच्च सूत्रकारेण कृत्स्नप्रसक्त्यधिकरणे स्थापिताः ॥ ५ ॥ इत्थञ्च निरवयवत्वेन प्रतिपन्नस्य ब्रह्मणः कार्यत्वानुपयुक्ताशान्तरस्वीकारेऽपि प्रमाणप्रतिपन्ननित्यत्वभङ्गभियाऽनादिसिद्धानेकांशात्मकत्व यथा स्वीकृतं ; तथैव प्रत्यगात्मनामपि तत्स्वीकारे क्षतिविरहेणाणोरणीयसः परमात्मनस्तदन्तर्व्याप्तिर्निराबाधा॥ ६ ॥ एवमत्र परमात्मनस्सर्वकार्यबहिर्भूतकार्यत्वानुपयुक्ताशान्तरसद्भावाङ्गीकारेण महतो महीयसस्तस्य विश्वपेक्षया बहिर्व्याप्तिरपि निराबाधैव ॥ ७ ॥ न च विभुद्रव्यापेक्षया बहिर्भूतांशान्तरसद्भावः प्रमाणाप्रतिपन्न इति वाच्यं, प्रागुदाहृतगीताविष्णुपुराणवचनैः कृत्स्नस्य जगतः परमात्मन्यत्यल्पतमैकांश एव पर्याप्ततां प्रतिपादयद्भिस्तत्सिद्धेर्दुरपह्नवत्वात् ॥ ८ ॥ इत्थञ्च परमात्मप्रत्यगात्मना निरवयवत्वव्यवहारो वस्तुस्वरूपारम्भकानेकांशात्मकत्वाभावनिबन्धनः , सांशत्वव्यवहारोऽनादिसिद्धानेकांशात्मकत्वनिबन्धन इति न कश्चिद्विरोध इति ॥ ४९ ॥

तस्मादणुद्रव्येष्वन्तर्व्याप्तिर्विभुद्रव्येषु बहिर्व्याप्तेश्च परमात्मनो न सम्भवतीति वादः केवलकुतर्कमूलोऽसमञ्जस एवेति सिद्धं भवतीत्यल बहुना ॥ ५० ॥ तथा चानेन मन्त्रद्वयेनेदंशब्दवाच्यस्यैकस्यात्मनो ब्रह्मणस्स्वेतरसर्वातिशायिशक्तिमत्त्वसर्वान्तर्यामित्वपर्यवसन्नविभुत्वयोः प्रतिपादनाज्जगतो ब्रह्मात्मकत्वमप्युक्तं भवति ॥ ५१ ॥ इति पञ्चममन्त्रव्याख्यानम् ॥ ५ ॥

**यस्तु सर्वाणि भूतान्यात्मन्येवानुपश्यति ।**
**सर्वभूतेषु चात्मानं न ततो विजुगुप्सते ॥ ६**

वे॥एवं सर्वस्य ब्रह्मात्मकत्वमुक्तम्।अथ तद्विदस्सांप्रतिकं प्रयोजनमाह—**यस्तु जुगुप्सत** इति। ब्रह्मविन्माहात्म्ये विशेषद्योतनाय तुशब्दः। **सर्वाणि भूतानि** - ब्रह्मादिस्थावरान्तानि। अत्रात्मशब्द स्सङ्कोचकाभावात्प्रकरणादर्थस्वभावाच्च सर्वान्तरात्मविषयः । पृथिव्यादिभिर्भ्रियमाणमपि तन्मुखेन परमात्मन्यवस्थितमित्येवकाराभिप्रायः । **अनुपश्यति**—अनुस्यूत विशद निध्यायति । **सर्वभूतेषु चात्मानमिति** व्याप्तिमात्रपरम् , तस्य तैर्धार्यत्वाभावात् । स इति प्रतिनिर्देशोऽध्याहार्यः । **ततो न विजुगुप्सते**—ब्रह्मात्मकत्वेनानुदृष्टेषु सर्वेषु स्वात्मभूतिन्यायात्कुतश्चिदपि न विजुगुप्सते । क्वचिदपि निन्दा न करोतीत्यर्थः ॥ ६ ॥

कू॥एवं सर्वस्य ब्रह्मात्मकत्वमुक्तम् ; अथ सर्वं जगद्ब्रह्मात्मकमित्यनुसन्दधानस्य प्रयोजनमाह—**यस्तु सर्वाणीति** । यः - तत्त्वज्ञानी, अधिकारिणो माहात्म्यज्ञापनाय तुशब्दः । **सर्वाणि भूतानि**-ब्रह्मादिस्थावरान्तानि, **आत्मन्येव**-परमात्मन्येव,अनुस्यूतं पश्यति— निदिध्यासतीत्यर्थः। पृथिव्यादिभिर्भ्रियमाणमपि तन्मुखेन परमात्मन्येव स्थितमित्येवकाराभिप्रायः । किञ्च-**सर्वभूतेषु चात्मानं**-परमात्मानं यः पश्यति , इद व्याप्तिमात्रपरं, परमपुरुषस्यानन्याधारत्वादिति भावः। यच्छब्दस्य स इति प्रतिनिर्देशोऽध्याहार्यः । **स**:-उक्ततत्त्वज्ञानी, **ततः**-तेषु; सप्तम्यर्थे तसिः । ब्रह्मात्मकतया दृष्टेषु सर्वेषु भूतेष्वित्यर्थः । **न विजुगुप्सते**—कुतश्चिदपि न बीभत्सते, स्वात्मविभूतिन्यायात् क्वचिदपि निन्दां न करोतीति भावः ॥ ६ ॥

श्री॥प्राक्मन्त्रद्वयेनेदृच्छब्दवाच्यस्यात्मनस्स्वेतरसर्वातिशायिशक्तिमत्त्वसर्वान्तरात्मत्वलक्षणस्वरूपकथनेन जगतस्सर्वात्मना तन्नियाम्यत्वपर्यवसन्नं तदात्मकत्वमुक्त्वा ब्रह्मविदस्तदनुसन्धानावश्यकत्वज्ञापनाय तदनुसन्धानफलमभ्युदयमप्याह षष्ठेन मन्त्रेण ॥ १ ॥

अस्य पदविवरणं, **यस्तु**—ब्रह्मविन्मुमुक्षुस्तु, अत्र तुकारेण 'मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये। यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः' ॥ ७ ॥ ३ ॥ इति गीतावचनोक्तरीत्या ज्ञानविशेषपरिपाकलक्षणवक्ष्यमाणमहिमा कस्यचिदेव सम्भवति ; न तु सर्वस्येति तादृशमहिमशालिनो दौर्लभ्यं ज्ञाप्यते। **सर्वाणि भूतानि** - ब्रह्मादीनि स्थावरान्तानि परमात्मव्यतिरिक्तसर्वभूतानि,**आत्मन्येव**—पूर्वोक्तेदृच्छब्दवाच्यपरमात्मलक्षणैकात्मन्येव, **अनुपश्यति**—अनुसन्धत्ते, तदायत्तस्थितिकान्येवानुसन्धत्त इत्यर्थः । तेषां पृथिव्यादिधार्यत्वेऽपि पृथिव्यादीनामप्याधारपर्यालोचनेऽन्ततः परमात्मन एव प्रधानाधारत्वात्तदायत्तैव सर्वभूतस्थितिः , नान्यायत्तेत्यंश एवकारेणेह विवक्षितः । किञ्च-**सर्वभूतेषु** - यथोक्तलक्षणेषु, **आत्मानं** - यथोक्तलक्षण परमात्मरूपमेकात्मानम्, **अनुपश्यति** - अत्र परमात्मनो नियमनार्थसर्वान्तस्थितिरूपान्तर्यामित्वमात्रमुच्यते, न तु परमात्मस्थितेस्सर्वभूतायत्तत्वमुच्यते, अन्योन्याश्रयप्रसङ्गात्प्रमाणान्तरानुरोधाच्च । इदञ्च वैचित्र्यं गीताशास्त्रे 'मया ततमिदं सर्वं जगदव्यक्तमूर्तिना । मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः' ॥ ९ ॥ ४ ॥ इत्यनेन, 'भूतभृन्न च भूतस्थो ममात्मा भूतभावनः'॥ ९ ॥ ५ ॥ इत्यनेन च भगवता स्वयमेवोक्तम्। तथा च कृत्स्नं जगत् स्वान्तर्नियन्तृतयाऽवस्थितब्रह्मात्मकमिति योऽनुसन्धत्त इत्यर्थः । स इत्यध्याहार्यं - यत्तदोर्नित्यसम्बन्धात् । **सः**—तादृशो ब्रह्मवित्, **ततः**—यथोक्तलक्षणब्रह्मात्मकतयाऽनुसंहितेभ्यस्सर्वभूतेभ्यः, **न विजुगुप्सते**—खेदजनकत्वानुसन्धानमूलमनोनिवृत्तिर्जुगुप्सा, तां न भजते, 'ध्रुवमपायेऽपादा-

श्री॥नम्' ॥ १ ॥ ४ ॥ २४ ॥ इति सूत्रभाष्योदाहृतेन'जुगुप्साविरामप्रमादार्थानामुपसङ्ख्यानम्' इति वार्तिकेनापादानसंज्ञया तत इत्यत्र पञ्चम्यर्थे तसिः ॥ गुपधातोर्भौवादिकान्निन्दार्थे 'गुप्तिज् किद्भ्यः स्सन्' ॥ ३ ॥ १ ॥ ५ ॥ इत्यनुशासनेन 'गुपेर्निन्दायाम्' इति वार्तिकानुगृहीतेन सन्। 'गुप्तिज्कितमाना अनुदात्तेतः' इति भाष्येऽनुदात्तेत्त्वाभिधानादात्मनेपदमिति बोध्यम् ॥ २ ॥

अयमत्र भावः—भूतेषु स्वखेदजनकत्वानुसन्धानेन हि तेभ्यः कश्चिन्निवर्तते तानि द्विषन्; सर्वभूताना नियन्तृभूतब्रह्मात्मकत्वानुसन्धाने सति स्वखेदजनकतच्चेष्टायास्स्वकर्मानुगुणफलदानाय तदन्तर्यामिनियन्तृपरमात्मायत्तत्वानुसन्धाने सति तेषु स्वखेदजनकत्वानुसन्धाननिवृत्त्या तन्मूला तेभ्यो मनोनिवृत्तिरूपा जुगुप्सा न जायत इति ॥ ३ ॥ ईदृशजुगुप्सानुदयेन किं प्रयोजनमिति चेत्? जुगुप्सायां सत्यां तत्प्रतियोगिषु भूतेषु द्वेषमूलोत्तरोत्तरसंसाराभिवृद्धिप्रसङ्गेन तदनुदये तदभावलक्षणं मुमुक्षोरपेक्षित परमं फलं सिद्ध्यतीत्याशयः ॥ ४ ॥ तस्माद्ब्रह्मविदो मुमुक्षोः कृत्स्ने जगति ब्रह्मात्मकत्वानुसन्धानमत्यावश्यकमिति मन्त्रतात्पर्यम् ॥ ५ ॥ अस्मिन्मन्त्रे 'आत्मन्येवानुपश्यति' इत्यत्र, 'आत्मन्नेवानुपश्यति'इति, 'विजुगुप्सते' इत्यत्र'विचिकित्सति' इति च माध्यन्दिनाना पाठः॥ ६॥ तत्पक्षे 'आत्मन्नेव' इत्यत्र सप्तम्याश्छान्दसो लुक्। 'नविचिकित्सति' इत्यस्य न संशेत इत्यर्थः।'ततः' इत्यत्र सप्तम्यर्थे तसिरिति बोध्यम् ॥ ७ ॥ तत्रापि ब्रह्मात्मकत्वेनानुसहितेषु भूतेषु प्रागुक्तहेतुना स्वखेदजनकत्वसंशयं ब्रह्मविन्न प्राप्नोति। ततश्च तेषु द्वेषानुदयेन संसारवृद्धेर्नावकाश इति पूर्वोक्तभाव एव पर्यवसानं बोध्यम्॥ ८ ॥ 'कित निवासे रोगापनये संशये च' इति धातोर्भौवादिकात् 'कितेर्व्याधिप्रतीकारे निग्रहेऽपनयने नाशने संशयेच' इति वार्तिकानुगृहीतेन पूर्वोक्तानुशासनेन संशयार्थे सन् ॥ ९ ॥ 'गुप्तिज्कितमाना अनुदात्तेतः'इत्यत्र 'अनुक्रमदर्शनाय कितिः पठितः,न तु अयमनुदात्तेत्'इति कैयटेन कितेरनुदात्तेत्त्वे तात्पर्याभाववर्णनान्नात्रात्मनेपदम् ॥ १० ॥ अनुदात्तेत्त्वनिबन्धनस्यात्मनेपदस्य क्वचिज्ज्ञापकवशादनित्यत्वाश्रयणाद्वा नेहात्मनेपदम् ॥ ११ ॥ यत्पुनरत्र, आत्मपदस्य अनुसन्धातुर्मुमुक्षोस्स्वात्मस्वरूपपरतामाश्रित्य 'यस्तु परिव्राड् मुमुक्षुः-सर्वाणि भूतानि अव्यक्तादीनि स्थावरान्तानि, आत्मन्येवानुपश्यति - आत्मव्यतिरिक्तानि न पश्यतीत्यर्थः । सर्वभूतेषु च - तेष्वेव च - आत्मानं-तेषामपि भूतानां स्वमात्मानमात्मत्वेन, अनुपश्यति - सः ततः - तस्मादेव दर्शनात्, न विजुगुप्सते-जुगुप्सां घृणां न करोति' इति शङ्करकृतं व्याख्यानम् ॥ १२ ॥ तदसमञ्जसम्, उदक्षरत्वादर्थबाधाद्व्याघातात्प्रकरणविरोधात्; न विजुगुप्सत इत्युक्तघृणानिवृत्तिं प्रति ततः पूर्वभागप्रतिपाद्यतया विवक्षितस्यार्थस्य हेतुत्वासम्भवाच्च॥ १३॥ यथा हि 'भूतल एव घटं पश्यति'इति वाक्येन घटस्य भूतलवृत्तित्वदर्शनतदितरवृत्तित्वादर्शनैतदुभयविषयकबोध एव जायते; न तु घटस्य भूतलव्यतिरिक्तत्वादर्शनविषयकबोधोऽपि; तथैव-'सर्वाणि भूतान्यात्मन्येवानुपश्यति' इति वाक्येनापि सर्वभूतानामात्मवृत्तित्वदर्शनतदितरवृत्तित्वादर्शनैतदुभयविषयकबोध एव भवितुमर्हति; न तु सर्वभूतानामात्मव्यतिरिक्तत्वदर्शनाभावविषयकबोधोऽपीत्यतः-'आत्मव्यतिरिक्तानि न पश्यतीत्यर्थः' इति व्याख्यानमक्षराननुगुणमेव ॥ १४ ॥ एवं सर्वभूतशब्दस्याव्यक्तादिस्थावरान्तजडपदार्थजातमात्रस्यार्थतया विवक्षितत्वेन दर्शितव्याख्याने जडाजडयोः परस्परव्यतिरिक्तत्वादर्शनस्य देहात्मैक्यदर्शनलक्षणविपरीतज्ञानपर्यवसन्नस्यैव विविवक्षितत्वलाभेनार्थबाधस्य दुरपह्नवत्वात्,-ईदृशविपरीतज्ञानस्य प्रत्युत संसारदुःखाभिवृद्धिहेतोर्घृणानिवृत्तिहेतुत्वासम्भवाच्चासामञ्जस्यं दुर्वारम् ॥ १५ ॥ एवं 'सर्वभूतेषु चात्मानम्' इत्यत्र शरीरस्थानीयसर्वभूतानि प्रति स्वात्मस्वरूपस्यात्मत्वेन दर्शनस्यैव विवक्षिततया सर्वभूतानामात्मनश्च भेददर्शनस्यैव सिद्धेः; पूर्ववाक्यार्थस्याभेददर्शनपर्यवसायिन एव विव -

**यस्मिन् सर्वाणि भूतानि आत्मैवाभूद्विजानतः ।**
**तत्र को मोहः कश्शोक एकत्वमनुपश्यतः ॥ ७**

---

**वे॥**पुनरपि सर्वस्य ब्रह्मात्मकत्व सामानाधिकरण्येन द्रढयति। तथानुदर्शनस्य सद्यश्शोकनिवर्तकत्व-माह —**यस्मिन् .पश्यत** इति।**यस्मिन्**-प्रणिधानसमये।**विजानतः**-स्वतन्त्रपरतन्त्रवस्तुभेद सम्यगुप

---

**कू॥**एव वैयधिकरण्येनोक्तं सर्वस्य ब्रह्मात्मकत्वं सामानाधिकरण्येनापि द्रढयन् तथानुध्यानस्य सद्यश्शोकमोहनिवर्तकत्वमाह —**यस्मिन्त्सर्वाणीति**। **यस्मिन्**— प्रणिधानसमये, **विजानतः**-'ईशा-

---

**श्री॥**क्षितत्वाच्च परस्परव्याघातोऽपि भवति॥१६॥यदि च भूतजातस्यात्मन इह विवक्षितव्यतिरिक्तत्व-दर्शनाभावो न तयोस्स्वरूपैक्यदर्शनपर्यवसायी ; अपि तु अपृथक्सिद्धविशेषणविशेष्यभावनिबन्धनपरस्पराविनाभावलक्षणाभेददर्शनपर्यवसाय्येव विवक्षितः ; अतो नात्र व्याघातप्रसङ्ग इति मन्यते ॥ १७ ॥ तदाऽपि, अजडस्यातिनिर्मलस्यात्मनस्सर्वदोषाकरजडवस्तुसंसर्गदर्शनस्यैव विवक्षितत्वसिद्ध्या तस्य प्रत्युतजुगुप्साहेतुताया एव सम्भवेन तन्निवृत्तिहेतुत्वासम्भवाद्वाक्यार्थासङ्गतिर्दुर्वारैव ॥ १८ ॥ स्वस्मिन्नमेध्यसंसर्गदर्शनस्य हि जुगुप्साहेतुता सर्वलोकसाक्षिका दृश्यते ॥ १९ ॥ एवम् - अत्रत्यात्म-शब्दस्य मुमुक्षुचेतनस्वात्मस्वरूपपरतावर्णनमप्ययुक्त - पूर्वं प्रथममन्त्रे, ईशेतीदृच्छब्देनेश्वरत्वेन कञ्चिदा-त्मानं निर्दिश्य तद्भिन्नस्येशितव्यस्य कृत्स्नस्य जगतस्तच्छेषता प्रतिपाद्य, ईश्वरत्वेन निर्दिष्टस्यात्मन-श्शास्तृत्वरूपेश्वरत्वशालितया तच्छासनातिलङ्घने तदधीनदण्डप्रसङ्गपरिहाराय तदीशितव्यतच्छेषभूत जगदन्तर्गततदितरचेतनसामान्येन तच्छासनानुवर्तिना तदधीनेनैव वर्तितव्यमिति तच्छासनानुवृत्तिप्र-कार 'तेन त्यक्तेन भुञ्जीथाः' इति 'मा गृधः कस्य स्विद्धनम्' इति 'कुर्वन्नेवेह कर्माणि जिजीविषे-च्छतँ समाः' इति च प्रथम मन्त्रद्वयेन ज्ञापयित्वा, ईडशेशेशितव्यशेषशेषिभावज्ञानतदधीनेश्वरशास-नानुवर्तनविरहिणाम्महानर्थप्रसङ्गं तृतीयमन्त्रेण प्रदर्श्य, ततो बहुष्वात्मसु सत्सु कस्यचिदेकस्यात्मनः परमितरैस्सर्वैरनुवर्तनीयशासनत्वं कुत इत्याकाङ्क्षायामीदृच्छब्दनिर्दिष्टस्यात्मनस्सकलेतरात्मातिशायिश क्तिमत्त्वसर्वजगत्कारणत्वसर्वभूतान्तरात्मत्वलक्षणस्वरूपप्रतिपादनमुखेन नियन्तृतयाऽन्तर्यामिभूतेश्वरा-त्मकत्वं सर्वप्रकारतन्नियाम्यत्वरूपं जगतश्चतुर्थपञ्चममन्त्राभ्या प्रतिपाद्य,स्वेष्टसाधनतया कृत्स्नस्य जगतः पूर्वमन्त्रोक्ताकारानुसन्धानं मुमुक्षोर्ब्रह्मविद आवश्यकमिति ज्ञापनाय प्रवृत्तत्वादस्य षष्ठमन्त्रस्य-अस्मिन् प्रकरणे ब्रह्मविदो मुमुक्षोस्स्वात्मस्वरूपे सर्वभूतान्तरात्मत्वानुसन्धानस्य प्रसङ्गलेशाभावात् ; ईदृच्छब्द-निर्दिष्टस्यात्मन एकस्यैव सकलेतरातिशायिशक्तिमत्त्वस्वेतरचेतनाचेतनलक्षणसर्ववस्त्वन्तरात्मत्वादिप्र तिपादनेनान्यस्यात्मनः कस्यापि तथाविधाकारासम्भवाच्च॥ २० ॥ न च - आत्मतत्त्वस्यैकत्वेन तस्यैव स्वस्मिन् परेषु च वर्तमानत्वात्तस्यैवेदृच्छब्दवाच्यात्मरूपत्वाच्चात्मभेदाभावेन मुमुक्षोर्ब्रह्मविदस्स्वात्म-स्वरूपे सर्वभूतशब्दिताव्यक्तादिस्थावरान्ताचेतनभागान्तर्वर्तित्वमात्रलक्षणसर्वभूतान्तरात्मत्वाकारानुस न्धानमिहाभिधीयत इति नात्र विरोध इति वाच्यम्, ईदृच्छब्देनेश्वरत्वेन कस्यचिदात्मनो निर्देशेना-न्यस्य कृत्स्नस्य जगत ईशितव्यत्वसिद्धेरीशितव्यान्तर्गतेतरात्मनामीदृच्छब्दवाच्यात्मशासनानुवर्तनविधा-नाच्च पूर्वमात्मभेदस्यैवास्मिन् प्रकरणे सुव्यक्तं प्रतिपादनदर्शनादात्मैक्यप्रतिपादनगन्धानुपलम्भाच्च॥ २१ ॥ एतेनैतदनुसारिमहीधरादिव्याख्यानमपि निरस्तं वेदितव्यम् ॥ २२ ॥ तस्माद्यथोक्तरीत्यैवार्थो बोध्यः ॥ २३ ॥ इति षष्ठमन्त्रव्याख्यानम् ॥ ६ ॥

पूर्वमन्त्रोक्तमेव जगतो ब्रह्मात्मकत्वं तदनुसन्धानफलञ्च पुनर्भङ्ग्यन्तरेण निर्दिश्य दृढीकरोति **सप्तमेन मन्त्रेण, अनयोरर्थयोस्सकृदभिधानमात्रेण निश्शङ्कं दुरवधरत्वात् ॥ १ ॥**

वे॥दिष्टेन मार्गेण शास्त्रेण विविच्य जानतः। **आत्मैव सर्वाणि भूतानि अभूत्**-परमात्मैव सर्वविशिष्टः प्रतीत इत्यर्थः । 'देवोऽहम्' इत्यादिवल्लोकवेदमर्यादया शरीरात्मभावेन जगद्ब्रह्मसामानाधिकरण्ये सम्भवति बाधोपचारस्वरूपैक्यादिपक्षा बहिष्कार्याः । **तत्र** - तदा, **को मोहः** - स्वतन्त्रात्मभ्रमादिलक्षणो मोहो न सम्भवतीत्यर्थः । **कश्शोकः**—परविभूतिभूते सर्वस्मिन्निर्ममत्वसिद्ध्या पुत्रमरणराज्यहरणादावपि न कश्चिच्छोकस्स्यादित्यर्थः । यथाह—'[1]अनन्तं बत मे वित्त यस्य मे नास्ति किञ्चन। मिथिलायां प्रदीप्तायां न मे किञ्चित्प्रदह्यते' इति । **एकत्वमनुपश्यतः**—सर्वविशिष्टैक्यमनुपश्यतः । न ह्ययमेकशब्दः एकव्यतिरिक्ताभाव परः, 'ईशा वास्यमिद सर्वम्' इति ईश्वरव्याप्तत्वेन प्रक्रान्तस्य

कू॥वास्यम्' इत्यारभ्य 'ततो न विजुगुप्सते' इत्येवमन्तेन उपदिष्टं स्वतन्त्रपरतन्त्रवस्तुभेद यथोपदेशं विविच्य जानत इत्यर्थः। नन्वेवमत्यन्तभेदाभ्युपगमे 'सर्वाणि भूतान्यात्मैवाभूत्' इति सामानाधिकरण्यं भज्येतेत्याशङ्क्य तन्निर्वाहाय 'यस्य पृथिवी शरीर' .'[2]यस्यात्मा शरीरम्' इत्यादिघटकश्रुतिसिद्धं सम्बन्धविशेषमाह **एकत्वमनुपश्यत** इति। आकृतिव्यक्त्योरिव गुणगुणिनोरिव चात्यन्तभिन्नयोरेव जगद्ब्रह्मणोरेकत्वं विभागानर्हसम्बन्धविशेष पश्यतः विशदतममनुध्यायत इत्यर्थः । '[3]रामसुग्रीवयोरैक्यं देव्येवं समजायत' इत्यादिष्विव इहाप्येकशब्दस्य सम्बन्धविशेष एवार्थो विवक्षितुं युक्त इति भावः । एवं च सत्याह—**सर्वाणि भूतान्यात्मैवाभूदिति** । परमात्मैव सर्वभूतशरीरकः प्रतीतोऽभूदित्यर्थः । **तत्र** तदा प्रणिधानसमये, **को मोहः**-स्वतन्त्रात्मभ्रमादिलक्षणो मोहो न सम्भवति । **कश्शोकः**-परमा-

श्री॥अस्य मन्त्रस्य पदविवरणं—**विजानतः**-शास्त्रतश्शनैश्शनैस्सर्वं तत्त्वं विविच्य जानतः, शास्त्रजन्यविशुद्धज्ञानपरिपाकविशेषवत इत्यर्थः । मुमुक्षोः, **यस्मिन्**-दशाविशेषे, **आत्मैव**—यथोक्तलक्षणः परमात्मेव, **सर्वाणि - भूतानि** - शरीरशरीरिभावरूपापृथक्सिद्धविशेषणविशेष्यभावलक्षणाविनाभावसम्बन्धेन सम्मिलिततया सर्वभूतरूपः। अत्रासन्धिश्छान्दसः । **अभूत्**-निश्चयविषयो भवति, 'छन्दसि लुङ् लङ् लिटः'॥३॥४॥६॥ इत्यनुशासनेन लडर्थे लुङ्। धात्वर्थसत्ताया निश्चयविषयत्वरूपाया इह विवक्षिततया धातुनाऽयमर्थस्सुलभः । **तत्र** - तस्मिन् दशाविशेषे, **एकत्वं** - सर्वभूतैस्सह परमात्मन एकवस्तुत्वं यथोक्तं सर्वभूतशरीरकत्वमिति यावत्। **अनुपश्यतः** - सम्यङ्निध्यायतो मुमुक्षोः, **मोहः कः - शोकः कः** - मोहो वा शोको वा कथं भवति? न भवत्येवेत्यर्थ इति बोध्यम्॥

अत्र मोहः कथंभूतः? शोको वा कथंभूतः? सर्वभूतानां परमात्मनश्चेह विवक्षितमेकत्व वा कथंभूतं? तज्ज्ञानेन कथं वा मोहशोकनिवृत्तिर्भवतीति चेदिदमत्रावधेयम्—मोहोऽत्र स्वसजातीयेष्वात्मान्तरेषु स्वातन्त्र्येण स्वखेदजनकत्वज्ञानरूपः ॥ १ ॥ शोकश्चात्र परैस्स्वपरिभवे कृते कथं तूष्णीं स्थेयमिति चिन्तया तूष्णीमवस्थानासहिष्णुः परदुःखजननप्रवृत्तिहेतुर्दुःखविशेषः ॥ २ ॥ सर्वभूतानां परमात्मनश्चेह विवक्षतमेकत्वं शरीरशरीरिभावरूपापृथक्सिद्धविशेषणविशेष्यभावलक्षणाविनाभावसम्बन्धेन परस्परसम्मिलितैकवस्तुसङ्घातान्तःपातित्वरूपम् ॥ ३ ॥ तच्च सर्वभूतानां नियन्तृतयाऽन्तर्यामिभूतपरमात्मात्मकत्वरूपमेव ॥ ४ ॥ तस्मिंश्च निश्चिते परेषु स्वातन्त्र्येण स्वखेदजनकत्वमोहो निवर्तते 'ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति । भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया' ॥ गी ॥ १८ ॥ ६१ ॥ इत्युक्तरीत्या नियन्तृतयाऽन्तर्यामिभूतपरमात्मनैव प्रधानभूतेन नियाम्यभूतैरात्मान्तरैस्स्वापराधानुगुणफलभोगहेतुरयं दण्डो दाप्यते ; न तु स्वातन्त्र्येण तैरयं क्रियत इति निश्चयात् ॥ ५ ॥ निवृत्ते च तादृशमोहे तदधीनो यथोक्तलक्षणश्शोकोऽपि निवर्तते - अस्मदपराधानुगुणदण्डस्येश्वरेणैव

१. भारते. शा. १७-१९ ॥ २. शतपतब्राह्मणे, १४-५-३० ॥ ३. रामा. सु. ३५-५१ ॥

वे॥कस्यचित्केनचिदपि बाधाभावात्, सर्वभेदमिथ्यात्ववेदनावेदनयोः कथञ्चिदपि तादृशैक्योपदेशादिप्रवृत्त्ययोगाच्च । न चासौ परस्परविरुद्धानां स्वरूपैक्यप्रतिपादकः, सर्वव्याघातोत्सादने स्वपरमतविवेकादिविप्लवप्रसङ्गात् । विशिष्टैकत्वविवक्षा तु सर्वप्रमाणानुगुण्याद्भाव्यते । ततोऽपि परमत्र प्रकृतसामानाधिकरण्यनिर्वाहानुगुणसम्बन्धविवक्षा प्रयुज्यते । न हि सम्बन्धविशेषविवक्षया 'रामसुग्रीवयोरैक्यम्'इत्यादिष्वेकशब्दः । एतौ च श्लोकौ यद्यपि मुक्तविषयतया नेतुं शक्यौ, तथापि, पूर्वानुगुण्यान्मुमुक्षुप्रशसार्थत्वमुचितम् । ततश्च वैशद्यातिशयविवक्षया शास्त्रजन्यज्ञानेन तन्मूलोपासनात्मकज्ञानेन दर्शनवाचोयुक्तिः । समाधिविशेषफलभूतस्त्वद्यतनसाक्षात्कार उपायत्वेनाभिहितत्वान्नात्र संशयनीयः।मोक्षोपायोपदेशपरेषु सर्वेषु वाक्येषु दर्शनशब्द उपासनविषय इति शारीरकभाष्ये प्रत्यपादि॥७॥

---

कू॥त्मविभूतितयावगते सर्वस्मिन्निर्ममत्वसिद्ध्या पुत्रमरणराज्यहरणादेरपि न कश्चिच्छोकस्स्यादित्यर्थः। यथाह—'अनन्त बत मे वित्तं यस्य मे नास्ति किञ्चन। मिथिलायां प्रदीप्तायां न मे किञ्चित्प्रदह्यते' इति । अत्र केचित् 'सर्वाणि भूतान्यात्मैवाभूत्'इति बाधार्थं सामानाधिकरण्यं, तथा चात्मैव सर्वाणि भूतानि,आत्मव्यतिरिक्तानि सर्वाणि न सन्तीत्यर्थः,यथा 'चोरः स्थाणुः'इति; 'स्थाणुरेवायं चोरः'इति हि तस्यार्थः; तथेहापीत्याहुः। अन्ये तु 'नरपतिरेव सर्वे लोकाः' इतिवदौपचारिकमिदं सामानाधिकरण्यं,'नरपत्यधीनास्सर्वे जनाः'इति हि तत्र निर्वाहः, तद्वदिहापि परमात्माधीनानि सर्वाणि भूतानीति भावं वर्णयन्ति। अपरे तु 'घटशरावादयस्सर्वे मृत्पिण्ड एव' इतिवत् जगद्ब्रह्मणोरेकद्रव्यत्व परिकल्प्यैवेदं सामानाधिकरण्यं निर्वाह्यमित्याचक्षते । सिद्धान्तस्तु—'देवोऽहं मनुष्योऽहम्' इत्यादिवच्छरीरात्मभावसम्बन्धेनैव जगद्ब्रह्मसामानाधिकरण्यनिर्वाहे सम्भवति सति बाधोपचारस्वरूपैक्यपक्षा वैदिकैर्बहिष्कार्याः—इति ॥ ७ ॥

---

श्री॥करस्थानीयैरन्यैः कार्यमाणतया न तेषु कश्चिदपराध इति चित्तसमाधिसम्भवात्॥६॥ इत्थं समाहितचित्तस्य तेषु प्रतिक्रियाकरणप्रवृत्तिरपि निवर्तत इति ॥ ३ ॥ गीताभाष्ये 'निर्वैरस्सर्वभूतेषु' ॥ ११ ॥ ५५ ॥ 'अद्वेष्टा सर्वभूतानाम्' ॥ १२ ॥ १३ ॥ इत्यादिवचनव्याख्यानावसरे भाष्यकारैरपीदृशानुसन्धानेनैव स्वापकारिपरप्रतिक्रियाप्रवृत्तिनिवृत्तिसिद्धिर्मुमुक्षोः प्रतिपादिता॥४॥ यथोक्तं तत्र'स्वदुःखस्य स्वापराधनिमित्तत्वानुसन्धानात्सर्वभूतानां परमपुरुषपरतन्त्रत्वानुसन्धानाच्च सर्वभूतेषु वैरनिमित्ताभावात्तेषु निर्वैरः' इति 'अद्वेष्टा सर्वभूतानां' 'द्विषतामपकुर्वतामपि सर्वेषां भूतानामद्वेष्टा - मदपराधानुगुणमीश्वरप्रेरितान्येतानि भूतानि द्विषन्त्यपकुर्वन्ति चेत्यनुसन्दधानः' इति च ॥ ५ ॥ सर्वस्य जगत इत्थं ब्रह्मात्मकत्वलक्षणैक्यज्ञानस्येदृशानुसन्धानद्वारा मोहशोकनिवृत्तिलक्षणशान्तिहेतुत्वादेव 'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत' ॥ छां ॥ ३ ॥ १४ ॥ १ ॥ इति श्रुतिरपि जगतो ब्रह्मात्मकत्वानुसन्धानस्य शान्तिहेतुत्वमाह ॥ ६ ॥ शान्तिश्च दर्शितमोहशोकनिवृत्तिरेव ॥ ७ ॥ 'आत्मैव सर्वाणि भूतान्यभूत्'इत्यत्र सामानाधिकरण्यविवक्षितमैक्यं न स्वरूपैक्यरूपं, जडाजडयोस्स्वरूपैक्यासम्भवात्; स्वरूपैक्यस्यैवाभिमतत्वे पूर्वमन्त्रे सर्वभूतानामात्मवृत्तित्वस्य आत्मनस्सर्वभूतान्तर्व्याप्तत्वस्य चाभिधानेन तद्विरोधाच्च ॥ ८ ॥ स्वरूपैक्यलक्षणात्यन्ताभेदे सति आधाराधेयभावोऽपि हि न सम्भवति, आत्माश्रयदोषप्रसङ्गात् ॥ ९ ॥ न हि घटादयः पदार्थास्स्वस्मिन्नेवावस्थातुं शक्नुवन्ति ॥ १० ॥ अपि तु सर्वाणि भूतान्यन्तः प्रविश्यापृथक्सिद्धविशेषणविशेष्यभावलक्षणसम्बन्धविशेषेण तद्विशिष्टत्वरूपमेवैकत्वमिहात्मनो विवक्षितम् ॥ ११ ॥ तथा सत्येव विशिष्टवेषेणैकत्वस्य स्वरूप-

---

१. रामा. सु. ३५-५२ ॥ | २. भारते. शा. १७-१९ ॥

श्री॥भेदसत्त्वेनाधाराधेयभावस्य च द्वयोरंशयोर्मन्त्रद्वयाभिहितयोरुपपत्तिस्सम्भवति॥ १२ ॥ ईदृशैक्येन हेतुना लोकवेदयोस्सामानाधिकरण्यनिर्देशो हि समन्ततः प्रसिद्धः॥ १३ ॥ लोके 'देवोऽहम्, मनुष्योऽहम्,स्थूलोऽहम्,कृशोऽहम्'इत्यादिसामानाधिकरण्यनिर्देशेष्वपृथक्सिद्धविशेषणविशेष्यभावसम्बन्धेन देहविशिष्टत्वनिबन्धनमैक्यमेव निमित्तं दृश्यते, देहात्मनोस्स्वरूपभेदं जानद्भिरपि तथा निर्देशकरणदर्शनेन तेषां केवलभ्रान्तवाक्यताया दुर्वचत्वात् ॥ १४ ॥ वेदेऽपि तैत्तिरीयकोपनिषद्यानन्दवल्ल्यां षष्ठानुवाके 'तत्सृष्ट्वा । तदेवानुप्राविशत् । तदनुप्रविश्य । सच्च त्यच्चाभवत्' इति निर्देशेन, षष्ठप्रश्ने नारायणे दशमे नारायणानुवाके 'यच्च किञ्चिज्जगत्यस्मिन् दृश्यते श्रूयतेऽपि वा । अन्तर्बहिश्च तत्सर्वं व्याप्य नारायण स्थितः' इति निर्देशपूर्वकं 'स ब्रह्मा स शिवस्सेन्द्रस्सोऽक्षरः परमस्स्वराट्' इति निर्देशेन तत्रैव पञ्चाशानुवाके 'येन सर्वमिदं प्रोतं पृथिवी चान्तरिक्षञ्च द्यौश्च दिशश्चावान्तरदिशाश्च स वै सर्वमिदं जगत् । स च भूतं स च भव्यम्' इति निर्देशेन चान्तःप्रविश्य व्याप्तेस्सामानाधिकरण्यनिर्देशहेतुताऽवगम्यते ॥ १५ ॥ गीतास्वेकादशाध्याये सर्वान्तःप्रविष्ट भगवत्स्वरूपं भगवद्दत्तदिव्यचक्षुषा यथावत्साक्षात्कृत्य 'सर्वं समाप्नोषि ततोऽसि सर्वः' ॥ ११ ॥ ४० ॥ इति वदताऽर्जुनेन च परमात्मनस्सर्वजगत्सामानाधिकरण्येन निर्देशस्य सर्वजगदन्तरात्मतयाऽवस्थाननिबन्धनमेकसङ्घातान्तःपातित्वरूपं विशिष्टवस्त्वैक्यमेव हेतुः ; न तु स्वरूपैक्यमिति प्रस्फुटमेवाभिहितम्॥ १६॥

यत्पुनरत्र शाङ्करं व्याख्यानम्—पूर्वमन्त्रोक्तमेवार्थमयम्मन्त्र आह—विजानतः-परमार्थवस्तु विजानतः, यस्मिन् - काले - यथोक्तात्मनि वा, आत्मैव, सर्वाणि भूतानि - पूर्वोक्तान्येवाव्यक्तादिस्थावरान्तभूतानि, अभूत् - संवृत्तः, एकत्वम् - आत्मैकत्वम् , अनुपश्यतः, तत्र-तस्मिन्काले तस्मिन्नात्मनि वा, कश्शोकः, को मोहः । अनेन शोकमोहयोरविद्याकार्ययोरसम्भवप्रदर्शनेन सकारणस्य संसारस्यात्यन्तमेवोच्छेदः प्रदर्शितो भवति' इति ॥ १७ ॥ तदसमञ्जसम् , अत्र विवक्षितस्यार्थस्यानुवर्तमानप्रकरणविरुद्धत्वादप्रामाणिकत्वात् , शब्देन कथञ्चिदप्यलाभात् . विवेचनासहत्वात् , संसारात्यन्तोच्छेदहेतुत्वासम्भवाच्च ॥ १८ ॥ इदं तावदत्र प्रष्टव्यं ; कस्तावदर्थोऽत्र भवतो विवक्षित इति ॥ १९ ॥ 'आत्मैक एव परमार्थः-अन्यत्सर्वम्मिथ्या' इत्येवंरूपेणात्मैकत्वविज्ञानेन ससारनिश्शेषनिवृत्तिर्भवतीत्ययमेवार्थ इति चेन्न, 'ईशावास्यम्' इत्यारभ्य पूर्वमन्त्रपर्यन्तग्रन्थे, प्रथममीट्छब्देनेश्वरत्वेन कञ्चिदात्मानं निर्दिश्य तदितरस्य कृत्स्नस्य चेतनाचेतनात्मकस्य जगतस्तदीशितव्यरूपतां ज्ञापयित्वा पश्चात्तदीशितव्यजगदन्तर्गतस्य चेतनजातस्य तदाज्ञापरिपालननैयत्यञ्च विधाय, ईश्वरत्वेन निर्दिष्टस्यात्मनस्स्वेतरसर्वचेतनातिशायिशक्तिमत्त्वञ्च निरूप्य तत एव तस्येश्वरत्वसिद्धिञ्च ज्ञापयति सति, प्रस्फुटमीशेशितव्यभावेन परमात्मनस्तदितरस्य चेतनाचेतनात्मकस्य कृत्स्नस्य जगतश्च सत्यतां भेदञ्च प्रतिपादयताऽनेन प्रकरणेन विरुद्धत्वात्॥ २० ॥ न चेदृशोऽर्थः क्वाप्यनन्यथासिद्धेन प्रमाणेन प्रतिपद्यते ॥ २१ ॥ न च शब्देन वाऽत्रायमर्थो लभ्यते । 'आत्मैक एव परमार्थः' इति परमार्थशब्दघटितस्यात्मैकपारमार्थ्यप्रतिपादकस्य वा,'अन्यत्सर्वम्मिथ्या' इति मिथ्याशब्दघटितस्येतरमिथ्यात्वप्रतिपादकस्य वा वाक्यस्यात्रानुपलम्भात् ॥ २२ ॥ न च 'आत्मैव सर्वाणि भूतान्यभूत्' इति निर्देशेनैव आत्मन एव सत्यत्वम्, अन्येषां सर्वभूतानाम्मिथ्यात्वञ्च लभ्यत इति वाच्यम्;समानाधिकरणपदद्वयनिर्देशेन पदद्वयप्रतिपन्नयोरर्थयोरैक्यस्यैव लाभेन तत्रैकपदप्रतिपन्नार्थस्य सत्यताया अपरपदप्रतिपन्नार्थस्यासत्यतायाश्च कथञ्चिदप्यलाभात् ; 'भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे वृत्तिस्सामाना-

१. 'तत्पुरुषस्समानाधिकरणः कर्मधारयः'॥ १ ॥ २ ॥ ४२ ॥ अत्र 'समासैकार्थत्वादिति भाष्यप्रती- | कमादाय कैयटे 'भिन्नप्रवृत्तिनिमित्तप्रयुक्तस्यानेकस्य शब्दस्यैकस्मिन्नर्थे वृत्तिस्सामाधिकरण्य मुच्यते'इत्यस्ति॥

श्री॥धिकरण्यम्' इति वदद्भिश्शाब्दिकैरपि नानापदप्रतिपन्नार्थानामैक्यप्रतिपत्तेरेव समानाधिकरणशब्दनिर्देशायत्ततायाः प्रतिपादनात्, सामानाधिकरण्यस्य ह्यैक्य एव तात्पर्यमिति सर्वसम्मतमिति समानाधिकरणनिर्देशस्य पदद्वयप्रतिपन्नार्थयोरैक्य एव तात्पर्यमङ्गीकुर्वाणैर्भवद्भिरपि 'तत्त्वमसि' इत्यादौ तत्त्वंपदप्रतिपन्नयोरर्थयोरैक्यप्रतिपादनाङ्गीकारेणेह सामानाधिकरण्यस्यान्यार्थपरताकथनायोगाच्च॥२३॥ एवमत्र 'पूर्वमन्त्रोक्तमर्थमेवायमपि मन्त्र आह' इति वदद्भिर्भवद्भिः,सर्वभूतानामात्मेतरावृत्तित्वविशिष्टात्मवृत्तित्वे,आत्मनस्सर्वभूतवृत्तित्वेच,आधाराधेयसर्वपदार्थसत्यतामङ्गीकृत्यैव पूर्वमन्त्रेण प्रतिपाद्यमाने, आत्मन एकस्यैव परमार्थत्वमन्यस्य कृत्स्नस्य मिथ्यात्वञ्च प्रतिपादयत्ययम्मन्त्र इति कथन्नु वा वक्तुं शक्यम्॥२४॥आत्मव्यतिरिक्तानि सर्वभूतानि न पश्यतीति भवदुक्तार्थपरत्वं पूर्वमन्त्रस्य न कथञ्चिदपि सम्भवतीति तु प्रागेवावोचाम॥२५॥न च रज्जुसर्पभ्रमवता स्थाणुचोरभ्रमवता च भ्रमनिवृत्त्यनन्तरं भ्रमस्थले सर्पचोराभावज्ञापनतात्पर्येण प्रयुक्तयोः'इह रज्जुस्सर्पः, इह स्थाणुश्चोरः' इति वाक्ययोरज्जुस्थाणुसत्यत्वसर्पचोराभावप्रतिपादनपरत्वदर्शनाद्बाधार्थमपि सामानाधिकरण्यमस्ति।तद्वदिदमपि सामानाधिकरण्यं सर्वभूतानामभावप्रतिपादनमुखेनासत्यतामात्मसत्यताञ्च प्रतिपादयितुं क्षमत इति वाच्यम्, नानापदप्रतिपन्नार्थैक्यप्रतिपादकत्वस्यैव सामानाधिकरण्यलक्षणरूपतायाः प्रागेवोक्तत्वात्, सामानाधिकरण्यनिर्देशेषु सर्वत्र नानापदप्रतिपन्नार्थैक्यप्रतिपत्तेरेव सर्वानुभवसिद्धत्वाच्च सामानाधिकरण्यस्य बाधार्थकताया अप्रामाणिकत्वात्, दर्शितसामानाधिकरण्यनिर्देशयोरपि तात्पर्यवशेनावधारणगर्भत्वेन, 'इह रज्जुरेव सर्पः, इह स्थाणुरेव चोरः' इत्येवंरूपयोस्सर्पचोरशब्दाभ्यां स्वारसिकलक्षणया सर्पचोरप्रतीतिविषयपराभ्यां रज्जुस्थाणुरूपाधिष्ठानयोस्सर्पचोरप्रतीतिविषयैक्यप्रतिपत्तेः एवकारबलेनैवेतरव्यवच्छेदप्रतिपत्तेश्च दर्शनेन सामानाधिकरण्यनिर्देशस्य बाधार्थत्वादर्शनाच्च ॥ २६ ॥ सामानाधिकरण्यस्य बाधार्थत्ववादिन इदं तावत्प्रष्टव्याः,—दर्शितनिर्देशयोस्सर्पचोरशब्दयोः कोऽर्थः—इति॥२७॥ सर्पत्वचोरत्वयोर्वा सर्पचोरयोर्वाऽभाववन्तावर्थ इति चेत्॥ २८॥ किं तत्र शक्तिः-उत निरूढलक्षणा॥ २९ ॥ पक्षद्वयमप्यसङ्गतम्, तथा सति 'घटस्सर्पः, पटस्सर्पः, घटश्चोरः, पटश्चोरः' इत्यादेः प्रयोगस्य सर्वत्रैव स्वरसतस्सम्भवापत्तेः ॥ ३० ॥ अस्माकं तु स्थलविशेषेष्वेव पूर्वोत्पन्नभ्रान्त्यनुरोधेन स्वारसिकलक्षणाबलेनैव यथोक्तरीत्या 'इह रज्जुस्सर्पः' 'इह स्थाणुश्चोरः' इत्यादिस्वारसिकप्रयोगसम्भवात्, अन्यत्र तथाविधभ्रान्त्यभावेनैव दर्शितविरुद्धप्रयोगासम्भवाच्च न दोषः ॥ ३१ ॥ तस्मात्सामानाधिकरण्यस्य बाधार्थत्वमेवाप्रामाणिकम् ॥ ३२ ॥ अपि च - इह सामानाधिकरण्यस्य बाधार्थत्वस्वीकारेऽपि वा - परमात्मनि सर्वभूतत्वाद्यभावप्रतिपादनमात्रेण सर्वभूतानामेवासद्भावो मिथ्यात्व, परमात्मन एकस्य परं परमार्थत्वम् - इत्येते अंशाः कथमिव प्रतीयेरन्? ॥ ३३ ॥ न हि रज्ज्वादौ सर्पत्वाद्यभावप्रतीतिमात्रेण सर्पादिपदार्थस्यैव क्वाप्यसद्भावम्मिथ्यात्वं रज्ज्वादिमात्रस्य सत्यत्वञ्च, 'इह रज्जुस्सर्पः' 'इह स्थाणुश्चोरः' इत्यादिनिर्देशात्कश्चित्प्रत्येति ॥ ३४ ॥ प्रत्युत पूर्वमन्त्रे सर्वभूतानां परमात्मनि वृत्तेरेव प्रतिपन्नतया तद्विरोधेन नास्मिन्मन्त्रे सामानाधिकरण्यनिर्देशेन तदसत्यत्वं कश्चित्प्रतीयात् ॥ ३५ ॥ एतेन भवन्मतेऽपि, 'इह रज्जुस्सर्पः' 'इह स्थाणुश्चोरः' इत्यादौ रज्ज्वादीनां सर्पादिधीविषयैक्यप्रतीतिरूपशाब्दबोधे सर्पाद्यभावभानाभावेऽप्युदीच्यमानसम्बोधे वा सर्पाद्यभावभानस्वीकारेण तद्वदेवेहापि 'आत्मैव सर्वाणि भूतान्यभूत्' इति सामानाधिकरण्यनिर्देशवशादुदीच्यमानसबोधेवाऽऽत्मनि सर्वभूताभावभानं दुर्वारमिति शङ्काऽपि दूरोत्सारिता । किञ्चिद्देशविशेषकालविशेषावच्छेदेन भूताभावज्ञानमात्रेण सर्वेषु देशकालेषु तदभावनिश्चयासिद्ध्या

१. छा. उप. ६-८-७ ॥

**स पर्यगाच्छुक्रमकायमव्रणमस्नाविरँ शुद्धमपापविद्धम् ।**
**कविर्मनीषी परिभूस्स्वयंभूर्याथातथ्यतोऽर्थान् व्यदधाच्छाश्वतीभ्यस्समाभ्यः ॥८**

---

वे॥पुनरप्येनम् ईशेशितव्यतत्त्ववेदिनं वेदितव्यविशेषबोधनेन च विशिनष्टि-**सपर्यगात् समाभ्यः**

---

कू॥पुनरप्येनमीशेशितव्यतत्त्ववेदिनं वेदितव्येश्वरस्वरूपशोधनेन च विशिंषन् ध्यानयोगादिकमप्युपदिशति—**सपर्यगादिति** । **सः**-सर्वभूतान्तरात्मभूतब्रह्मदर्शी, **पर्यगात्** - पर्यगच्छत् , प्राप्नु-

---

श्री॥ भवदभिमततन्मिथ्यात्वात्मैकपरमार्थत्वयोरसिद्धेः,प्रतियोग्यप्रसिद्धावभावप्रतीतेः क्वाप्युदयादर्शनेन क्वचित्प्रसिद्धस्यैवान्यत्राभावज्ञानोदयस्य वक्तव्यतया सर्वेषु देशकालेषु कस्यापि वस्तुनोऽभावज्ञानस्य क्वाप्युदयासम्भवात्; 'इह रज्जुस्सर्पः' 'इह स्थाणुश्चोरः' इत्यादिदृष्टान्तभूतवाक्यादपि पूर्वसञ्ज्ञातसर्पचोरभ्रमस्थल एव तदभावप्रतीतेरन्यत्र तदभावाप्रतीतेश्च सर्वानुभवसाक्षिकत्वाच्च ॥ ३६ ॥ एवमात्मन एकत्वज्ञानात्सर्वसंसारबन्धगन्धनिवृत्तिपर्यवसन्नमोहशोकनिवृत्तिसिद्ध्यभिधानमप्यसमञ्जसम् - क्वचिदपीदृशैकत्वज्ञानमात्रेण दर्शितलक्षणमोहशोकनिवृत्त्यदर्शनेन तस्य तन्निवृत्तिप्रयोजकताया एवासम्भवात् ॥ ३७ ॥ एवं भवदभिमतमात्मन एकत्वं किंरूपमिति विवेचयामः ॥ ३८ ॥ न तावदेकत्वसङ्ख्यारूपं तत् - तस्य सर्वसाधारणत्वेन भवदभिमतवस्त्वन्तरसद्भावव्यावर्तकत्वायोगात्; तज्ज्ञानस्य भवदभिमतमोहशोकनिवृत्तिप्रयोजकत्वसम्भावनागन्धानर्हत्वाच्च ॥ ३९ ॥ नापि द्वैतशून्यत्वरूप तत्—द्वैतस्य प्रसिद्धौ तदभावस्यात्मन्यसम्भवात् ; अप्रसिद्धौ च प्रतियोग्यप्रसिद्ध्या सुतरामेव तदभावासम्भवाच्च ॥ ४० ॥ न हि खलु क्वचिदप्यप्रसिद्धस्य कस्यचिद्वस्तुनोऽभावं क्वचित्कश्चित्पश्यन् दृश्यते ॥ ४१ ॥ पश्यति च - 'तत्र स्थितमिदं वस्त्विह नास्ति ; अत्र स्थितमिद वस्तु तत्र नास्ति' इत्येव च ॥ ४२ ॥ एवम् 'आत्मन्यात्मैव सर्वाणि भूतान्यभूत्' इति या योजना कृता , सा चात्यन्तासम्बद्धा, आत्माश्रयदोषप्रसङ्गेनात्मन आत्माधारत्वायोगात् ॥ ४३ ॥ तस्मात्सर्वथैवासंबद्धं शाङ्करव्याख्यानमिति सिद्धम् ॥ ४४ ॥ एवं घटशरावादीनाम्मृत्पिण्डस्य चैक्यवज्जगद्ब्रह्मणोस्स्वरूपैक्यमाश्रित्य कैश्चित्क्रियमाणस्सामानाधिकरण्यनिर्वाहोऽप्यसमञ्जस एव, विकारादिसर्वदोषरहितत्वेन सर्वतश्श्रुतिस्मृत्यादिप्रमाणप्रतिपन्नस्य ब्रह्मणस्सर्वदोषाकरत्वप्रसङ्गात् ॥ ४५ ॥ 'राजैव प्रजाः' इतिवत्, 'आत्मैव सर्वाणि भूतानि' इत्यपि सामानाधिकरण्यनिर्देशस्तादधीन्यमात्रतात्पर्येणौपचारिक इति निर्वाहोऽप्ययुक्तः, मुख्यवृत्त्यैव निर्वाहे सम्भवत्युपचाराश्रयणायोगात्॥४६॥सिद्धान्ते तु 'सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि' ॥ ६ ॥ ३ ॥ २ ॥ इति 'सेयं देवतेमास्तिस्रो देवता अनेनैव जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरोत्' ॥ ६ ॥ ३॥३॥ इति च च्छान्दोग्यश्रुत्या परेण ब्रह्मणा स्वात्मकजीवस्वरूपेणाचित्तत्त्वानुप्रवेशं कृत्वा तत्तद्वस्तूनां नामानि रूपाणि च करवाणीति सङ्कल्पपूर्वकमचित्तत्त्वविशिष्टजीवविशिष्टस्वस्वरूपपर्यन्तसङ्घातात्मकानां तत्तद्वस्तूना नामरूपव्याकरणप्रतिपादनात् , प्रागुदाहृतश्रुत्यन्तरैरपि सर्वभूतेषु परमात्मानुप्रवेशस्य तेषां परमात्मनश्च सामानाधिकरण्यव्यपदेशहेतुताप्रतिपादनाच्च, सर्वभूतवाचिशब्दानां तद्विशिष्टे शक्तेरेव सद्भावोपगमेन 'आत्मैव सर्वाणि भूतान्यभूत्' इति सामानाधिकरण्यनिर्देशो मुख्य एव निर्वहति ॥ ४७ ॥ नापि च सर्वभूतविशिष्टैक्यस्य ततः प्रतीयमानस्य परमात्मनि बाधः ॥ ४८ ॥ तादृशैक्यमेव च 'एकत्वमनुपश्यतः' इत्यत्रैकत्वशब्देनापि विवक्षितम् ॥ ४९ ॥ अतस्सर्वं समञ्जसम् ॥ ५० ॥ इति सप्तममन्त्रव्याख्यानम् ॥ ७ ॥

वे॥इति।**सः**-सर्वभूतान्तरात्मभूतब्रह्मदर्शी,**पर्यगात्**-प्राप्नुयादित्यर्थः।'[1]ब्रह्मविदाप्नोति परम्' इति न्याया-त्समाधिलब्धेनानुभवेन प्राप्तवानिति सिद्धानुवादो वा,'[2]अत्र ब्रह्म समश्नुते' इतिवत्।**शुक्रम्**-अवकाशप्र-दातृरूपम्।**अकायं**-सर्वशरीरकमपि कर्मशरीररहितम् । अतएव—**अव्रणम्**-**अस्नाविरञ्च**। **शुद्धम्**-

---

कु॥यादित्यर्थः, '[1]ब्रह्मविदाप्नोति परम्' इति न्यायात्। यद्वा—समाधिलब्धेनानुभवेन उपलब्धवानिति सिद्धानुवादः। '[2]अत्र ब्रह्म समश्नुते' इति वत्। **शुक्रम्** - अवदातं, स्वप्रकाशरूपमित्यर्थः । **अकायं**-सर्वशरीरकमपि कर्मकृतहेयशरीररहितमित्यर्थः । '[4]न तस्य प्राकृता मूर्तिर्मांसमेदोऽस्थिसम्भवा'

---

**श्री**॥जगद्ब्रह्मणोरीशेशितव्यभावं ब्रह्मणस्सकलजगदन्तरात्मत्वं सकलेतरातिशायिशक्तिमत्त्वञ्च पूर्वोक्तरीत्या जानतो मुमुक्षोः पुनरपि तादृशज्ञानस्य ब्रह्मप्राप्त्यादिलक्षणफलप्रतिपादनेनावश्यकताम्, अन्येषामप्यवश्यानुसन्धेयानां ब्रह्मगतानामाकाराणामनुसन्धानार्थं तानाकारांश्च दर्शयत्यष्टमेन मन्त्रेण ॥

अस्य पदविवरणम्—**सः**-पूर्वोक्तलक्षणसर्वभूतान्तरत्वादिपरमात्मप्रत्यगात्माद्याकारपरिज्ञानवान्मुमुक्षुः, **अपापविद्धं** पापैः-सुकृतदुष्कृतलक्षणैः कर्मभिः, विद्धम् - व्याप्तं न भवतीति तथोक्तम्, अपहतपाप्मतया कर्मवश्यतागन्धरहितमित्यर्थः । अत एव **शुद्धं** - सुखदुःखरूपकर्मफलभोगहेतुरहितम् , अत एव - **अकायं** - सर्वशरीरमप्यशरीरम् , अत्राशरीरत्व - न सामान्यतश्शरीरशून्यत्वं, नापि प्राकृतशरीरशून्यत्वं-'[5]यस्य सर्वाणि भूतानि शरीरं' '[6]जगत्सर्वं शरीरं ते' इत्यादिश्रुतिस्मृतिभिर्ब्रह्मणः प्राकृताप्राकृतसर्वतत्त्वशरीरत्वप्रतिपत्तेः, नापि कर्माधीनशरीरशून्यत्वं-कर्माधीनसंसारिशरीराणामपि जगदन्तःपातिना दर्शितप्रमाणैरेव ब्रह्मशरीरताप्रतीतेः; अपि तु-स्वप्रयोज्यकर्मफलसुखदुःखभोगाश्रयत्वसम्बन्धेन शरीरशून्यत्वं,नियमनार्थमन्तःप्रविष्टं परं ब्रह्म प्रति प्राकृताप्राकृतसर्वतत्त्वाना शरीररूपत्वेऽपि तदधीनकर्मफलभूतसुखदुःखभोगाश्रयत्वस्य ब्रह्मण्यभावेनैवात्राशरीरत्वनिर्देश इति न विरोधः । अत एव - **अव्रणं** - व्रणरहितं, व्रणशब्दस्सर्वव्याध्युपलक्षकः, अत्रापि व्रणरहितत्व - न सम्बन्धान्तरेण-बाधात् ; अपि तु-स्वजन्यदुःखाश्रयत्वसम्बन्धेन व्रणशून्यत्वम् । **अस्नाविरं** - सिराः-'ष्णु-प्रस्रवणे'इति धातुना-स्नावयन्ति - एकदेशस्थमपि कल्मषं कृत्स्नशरीरे प्रस्नावयन्तीति व्युत्पत्त्या निष्पन्नस्स्नावशब्दो नाडीपरः,तैत्तिरीयोपनिषदि शिक्षावल्ल्यां सप्तमानुवाके-'[7]चर्ममांसँ स्नावास्थिमज्जा' इत्यत्र स्नावशब्दस्य नाडीपरतया प्रयोगात् । 'तुन्दादिभ्य इलच्च' ॥ ५ ॥ २ ॥ ११६ ॥ इति सूत्रानुसारिणा 'स्वाङ्गाद्विवृद्धौ च' - इति वार्तिकानुशासनेन विवृद्धाः स्नावा अस्मिन् सन्तीति मत्वर्थीये लच्प्रत्यये-रलयोरभेदेन लकारस्थाने रेफे च सति-स्नाविरमिति भवति । तन्न भवतीत्यस्नाविरं-स्वप्रसार्यमाणकलुषप्रयोज्यदुःखभोगाश्रयत्वसम्बन्धेन नाडीयुक्तं न भवतीति यावत् । शरीरव्यापिन्यो हि नाड्यश्शरीरैकदेशवर्तिनो व्रणादेस्सम्बन्धिदुःखहेतुभूतम्मलं शरीरे प्रदेशान्तरावच्छेदेनापि प्रत्यगात्मनि सम्बन्धयन्त्यो दुःखं जनयन्ति ; न तु तथा परमात्मनि, तद्धेतुकर्माभावादित्यर्थः । अत एव - **शुक्रं** - शुक्लं, रलयोरभेदात् , निष्कलङ्कं पर ब्रह्म ; **पर्यगात्** - परितः प्राप्नोति, सर्वप्राकारेणानुभवति । '[1]ब्रह्मविदाप्नोति परम्' इत्युक्तफलनिर्देशोऽयम् । 'छन्दसि लुङ् लङ् लिटः' ॥ ३ ॥ ४ ॥ ६ ॥ इत्यनुशासनेन लडर्थे लुङ् । एवं - **सः** - मुमुक्षुर्ब्रह्मवित् , **मनीषी** - यथोक्तलक्षणब्रह्मवेदनम

---

१. तै. उप. आनन्द. १-१ ॥
२. कठोप. २-६-१४ ॥
३. तै. उप. आनन्द १-१ ॥
४. वाराहे. पु. ७५-४१ ॥ वायुपुराणेच पूर्वखण्डे. ३४-४० ॥
५. बृ. उप. ५-१५ ॥
६. श्रीरामायणे. यु. १२०-२७ ॥
७. तै. उप. आनन्द ॥

**वे** ॥ अनाघ्राताज्ञानादिदोषम् । **अपापविद्धम्** - अज्ञानादिकार्यकारणभूतपुण्यापुण्यरूपकर्मानालीढमित्यर्थः । 'न सुकृत न दुष्कृतम्' इत्यारभ्य 'सर्वे पाप्मानोऽतो निवर्तन्ते' इति हि निगम्यते । एवमशेषहेयप्रत्यनीकः परमात्मा मुमुक्षोः प्राप्यः प्रापक उपास्यश्च स्यात् । 'सः' इत्युक्तं ब्रह्मविदं सर्वार्थदर्शित्वेन विशिनष्टि—**कविः** क्रान्तदर्शी । व्यासादिवत्परतत्त्वतद्गुणबोधनानुगुणप्रबन्धनिर्मातेति वार्थः । मनस ईशित्री बुद्धिः मनीषा, तद्वान्-**मनीषी** । अभ्यासवैराग्याभ्यां निगृहीतान्तःकरण

---

**कू**॥इति हेयशरीरस्यैवान्यत्र प्रतिषेधदर्शनात्, न तु दिव्यमङ्गलविग्रहरहितमित्यर्थः।'यत्ते रूपं कल्याणतमं तत्ते पश्यामि' 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते' 'आदित्यवर्णं तमसः परस्तात्' इत्याद्युपनिषत्प्रसिद्धस्य अप्राकृतदिव्यविग्रहस्येह निषेधायोगादिति भावः । **अव्रणं**-कर्मायत्तशरीराभावादेवाक्षतम्, **अस्नाविरं**-स्नायुः सिरा यस्मिन्विद्यते तत् स्नाविरं,स्नाविरं न भवतीत्यस्नाविरम्, **शुद्धम्**-अनाघ्राताज्ञानादिदोषगन्धम् अशनायादिषडूर्मिरहितं च, **अपापविद्धम्**—अज्ञानादेः कार्यभूतैः कारणभूतैश्च पुण्यपापरूपकर्मभिरनालीढमित्यर्थः । 'न शोको न सुकृतं न दुष्कृतम्' इत्यारभ्य 'सर्वे पाप्मानोऽतो निवर्तन्ते' इति पापशब्देनोपसंहारदर्शनात् स्वर्गादिहेतुभूतपुण्यविशेषस्यापीह पापशब्देन सङ्ग्रहणमिति भावः। एवमशेषहेयप्रत्यनीकं परमात्मानं स विद्वान्पर्यगादिति पूर्वेण सम्बन्धः । एवंरूपः परमात्मा प्राप्यः प्रापक उपास्यश्च यस्य तं ब्रह्मविदं विशिनष्टि—**कविः**-व्यासादिवत्परमपुरुषतत्स्वरूपतद्विभूतितत्कल्याणगुणादिप्रकाशकप्रबन्धरूपाणां निर्मातेत्यर्थः । अथवा **कविः**-क्रान्तदर्शी, योगाभ्यासविधुरमनसा दुर्दर्शे परिशुद्धजीवात्मस्वरूपे अतिविशदाविच्छिन्नधारास्मृतिरूपज्ञानयोगनिष्ठ इत्यर्थः । कर्मयोगस्तु 'कुर्वन्नेवेह कर्माणि' इति श्लोकेन पुरस्तादेवोक्तः । अथ ज्ञानयोगसाध्यं प्रत्य-

---

**श्री**॥हिम्ना निरतिशयबुद्धिमान्, अत एव-**कविः**- कवयिता,स्वावगततत्त्वार्थानामन्येभ्योऽपि ज्ञापनाय ग्रन्थग्रथनेऽपि कुशलः, अत एव - **परिभूः** - विपरीतार्थवादिनः परिभवतीति परिभूः, कुमतिविरुद्धवादनिरसनकुशलः,अत एव-**स्वयंभूः**- स्वयभवतीति स्वयंभूः-स्वयं सत्तावानेव सन्—'असन्नेव स भवति। असद्ब्रह्मेति वेद चेत् । अस्ति ब्रह्मेति चेद्वेद। सन्तमेनं ततो विदुः'॥ तै॥२॥६॥१॥इति श्रुत्युक्तपरावरतत्त्वयाथात्म्यज्ञानलक्षणा सत्तां कुमतिविरुद्धवादाविचाल्यामेव स्वयं भजमानस्सन्नित्यर्थः। **शाश्वतीभ्यस्समाभ्यः**-चतुर्थ्यन्तमिदम्। बहुभ्यस्संवत्सरेभ्यः,भाविसुचिरकालोपयोगायेत्यर्थः । **अर्थान्**-परमपुरुषार्थहेतुशास्त्रार्थान्, **याथातथ्यतः** - यथातथाभाव-याथातथ्यं,ततः-वस्तुतो यथाभूताश्शास्त्रार्थास्तथात्वेनैव - पारमार्थिकाकारेणैव, न तु कुमतिपरिगृहीतविपरीताकारेणेति यावत् । **व्यदधात्**-स्वकृतग्रन्थैर्लोकेभ्यो विदधाति, ज्ञातव्यत्वेनोपादेयत्वेन च प्रतिपादनलक्षणं विधानमिह विपूर्वकदधात्यर्थः ; प्रसिद्धो ह्ययमंशो ब्रह्ममीमांसातद्वृत्त्यादिग्रन्थकृत्सु भगवद्बादरायणबोधायनादिषु ब्रह्मविदग्रेसरेषु महात्मसु । अत्रापि पूर्ववल्लडर्थे लङ्—इति ॥ २ ॥ तथा च - स्वोज्जीवनपरोज्जीवनहेतुतया यथोक्तलक्षणं परावरतत्त्वयाथात्म्यज्ञानं मुमुक्षोर्ब्रह्मविदोऽवश्यमुपादेयमिति भावः ॥ ३ ॥

यद्वा-'सः'इत्यादि प्रथमान्तं सर्वं परमात्मपरं,द्वितीयान्तं सर्वं प्रकृतिविनिर्मुक्तपरिशुद्धप्रत्यगात्मस्वरूपपरमित्यप्यस्य मन्त्रस्य योजना सम्भवति॥४॥ तदानीं तु-**शुद्धं**-प्रकृतिविनिर्मुक्तम्। अतएव-**अपापविद्धम्**—अर्थः प्राग्वत्; विशेषणान्तराणामपि तथा। **शुक्रं**-निष्कलङ्कं प्रत्यगात्मानमपि, **कविः**—

---

१. छा. उप. ८-४-१ ॥
२. ईशावा. १६ ॥
३. छा.उप. १-६-६ ॥
४. श्वेताश्व. ३-८ ॥

वे॥इत्यर्थः । परितो भवतीति **परिभूः**-विद्यान्तरवतस्सर्वानतिक्रम्य वर्तते । कामक्रोधलोभादीन् दुर्जयानरातीनभिभवतीति वा । **स्वयम्भूः**—अन्यनिरपेक्षसत्ताकः, नित्यात्मस्वरूपदर्शीति यावत् । **याथातथ्यतोऽर्थान्व्यदधात्**—परमपुरुषार्थतदुपायतद्विरोधिप्रभृतीन्सर्वान् पदार्थान् यथावद्विविच्य हृदयेन धृतवान् । **शाश्वतीभ्यस्समाभ्यः**—यावद्ब्रह्मप्राप्ति सर्वप्रत्यूहशमनार्थमिति भावः । यद्वा-प्रथमान्तञ्च द्वितीयान्तं च पदजातं क्रमात्परावरात्मविषयतया व्याख्येयम् । तदा 'शुक्रम्' इत्यादिकं सर्वोपाधिविनिर्मुक्तपरिशुद्धजीवपरम् । तमपि च, **सः**-परमात्मा, **पर्यगात्**-परितो व्याप्य स्थितः । 'कविः'इत्यादिकं सुगमम् । **याथातथ्यत** इत्यादि। अर्थान्-कार्यपदार्थान्, शाश्वतीभ्यस्समाभ्यः-यावद्विलयमवस्थातुं, याथातथ्यतो व्यदधात्, न पुनरैन्द्रजालिकवत्केवलं प्रकाशितवान् ॥ ८ ॥

---

कू॥गात्मसाक्षात्कारहेतुभूतं जीवात्मयोगमाह—**मनीषी**ति। मनस ईशित्री बुद्धिर्मनीषा, तद्वान्मनीषी, सौन्दर्यसौशील्यादिभगवद्गुणानां स्मृत्यभ्यासेन अन्यविषयवैराग्येण च निगृहीतान्तःकरण इत्यर्थः । तथा च गीयते—'असंशयं महाबाहो मनो दुर्निग्रहं चलम् । अभ्यासेन च कौन्तेय वैराग्येण च गृह्यत' इति । निरतिशयसुखरूपस्वात्मसाक्षात्काराय स्वात्मनि मनःप्रणिधानक्रियारूपयोगाभ्यासपर इति भावः । **परिभूः** कामक्रोधादीन् दुर्जयानरातीन्परिभवतीति परिभूः । अनेन विरोधिनिवृत्तिरूपयोगाङ्गसेवनमुक्तम् । योगाभ्यासफलमाह —**स्वयम्भूः**—अन्यनिरपेक्षसत्ताकः, नित्यनिरतिशयसुखरूपतया स्वात्मदर्शीति यावत् । **याथातथ्यतोऽर्थान्व्यदधात्**—यथावद्विविच्य. **अर्थान्**-प्रणवार्थान् 'तस्य वाचकः प्रणवः'। 'तज्जपस्तदर्थभावनम्' इति सूत्रोक्तान्. **व्यदधात्**-हृदयेन धृतवानित्यर्थः । **अर्थान्**-मोक्षतदुपायतद्विरोधिप्रभृतीन्सर्वान्पदार्थान् , **शाश्वतीभ्यस्समाभ्यः**-यावद्ब्रह्मप्राप्तीत्यर्थः । **याथातथ्यतः**-यथावत् , **व्यदधात्**-विविच्य हृदयेन धृतवान् , सर्वप्रत्यूहशमनार्थमिति भावः । अथवा—'शुक्रम्'इत्यादिद्वितीयान्तपदजातं परिशुद्धजीवपरम्।तमपि स परमात्मा पर्यगात्-परितो व्याप्य स्थित इति प्रथमान्तपदजातं परमात्मपरं योजनीयम् । तथा हि - **कविः**-स्वतस्सर्वदर्शी श्रीपाञ्चरात्रादिप्रणेता वा, **मनीषी**-मनःप्रभृतीनां जीवकरणानां नियन्ता, परितो भवतीति **परिभूः** —सर्वव्यापी, स्वयमेव भवति उद्भवतीति-**स्वयम्भूः** 'बहुधा विजायते' इत्यादिप्रसिद्धावतारशालीत्यर्थः । अत्र 'कविः'इत्यादिना कल्याणगुणविधानात् छान्दोग्ये 'एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः'इति हेयगुणान्प्रतिषिध्य 'सत्यकामस्सत्यसङ्कल्पः'इति कल्याणगुणविधानाच्च''निर्गुणं 'निरञ्जनम्'इत्यादिसामान्यनिषेधस्य हेयगुणनिषेधपरत्वं सुगमम्।**याथातथ्यत** इत्यादि-

---

श्री॥सर्वज्ञः, **मनीषी**—मनसैव सर्वपदार्थसङ्कल्पनशीलः,सहकार्यन्तरापेक्षामन्तरेण सङ्कल्पमात्रेण जगत्सृष्ट्यादिनिर्वहणशील इति यावत्; **परिभूः** परितो भवतीति परिभूः - समन्ततो व्याप्तः, सर्वव्यापक इति यावत् । **स्वयंभूः** - स्वयं भवतीति स्वयंभूः - अकर्मीयत्तस्वेच्छामात्राधीनलोकरक्षार्थनानावतार इति यावत् । **सः**-परमात्मा, **पर्यगात्**-परितो व्याप्नोति, अन्तर्बहिश्च व्याप्नोतीत्यर्थः । अपि च - **शाश्वतीभ्यस्समाभ्यः** - अनादिकालादिति यावत् । **अर्थान्**-सर्वानप्यर्थान्, **याथातथ्यतः**-'सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्' ॥ तै ॥ ना ॥ ६ ॥ १ ॥ ३८ ॥ इत्यादिश्रुत्युक्तरीत्या पूर्वपूर्वकल्पानुगुण्येनैव, **व्यदधात्** सृजति—इति विवरणं बोध्यम् ॥ ५ ॥ पर-

---

१. गीता. ६-३५ ॥
२. पातञ्जलयोगसूत्रे. १-२८ ॥
३. ,, १-२९ ॥
४ तै.आरण्य पुरुषसूक्तम्॥ ५. छा.उप.८ १-५॥
६. आत्मोपनिषदि ॥
७. श्वे. उप. ६-१९ ॥

**अन्धं तमः प्रविशन्ति येऽविद्यामुपासते ।**
**ततो भूय इव ते तमो य उ विद्यायाँ रताः ॥ ९**

वे॥एवं विचित्रशक्तिपरमात्मविषया कर्माङ्गिका विद्यामुपदिश्यानन्तरं केवलकर्मावलम्बिनः केवल-विद्यावलम्बिनश्च निन्दन् वर्णाश्रमधर्मानुगृहीतया विद्ययैव निश्श्रेयसावाप्तिमाह—**अन्धं तमः प्रविशन्ति येऽविद्यामुपासत** इत्यादिना । ये—भोगैश्वर्यप्रसक्ताः, **अविद्यां**—कर्म,ज्ञानविधुरकर्म-मात्रम् । 'अविद्या कर्मसंज्ञान्या तृतीया शक्तिरिष्यते' इति हि स्मर्यते । **उपासते**—एकान्तमनसोऽनुतिष्ठन्तीत्यर्थः । **अन्धम्**-अतिगाढम् । **तमः**-अज्ञानं, त्रिवर्गाभिषङ्गानान्तरीयकं नारकं तमो वा । केवलकर्मनिरतानां दुःखानुवृत्तिमधीयते चाथर्वणिकाः 'प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म । एतच्छ्रेयो येऽभिनन्दति मूढाः जरामृत्यू ते पुनरेवापि यन्ति' इति । **ततो**

कू॥**अर्थान्** कार्यपदार्थान्, **शाश्वतीभ्यस्समाभ्यः** यावद्विलयमवस्थातुं.**याथातथ्यतः** यथावत्, **व्यदधात्** -विविच्य-उत्पादितवान्. न पुनरैन्द्रजालिकवत् केवलं प्रकाशितवानिति भावः ॥ ८ ॥

एवं विचित्रशक्तिकपरमात्मविषयां कर्मयोगाद्यङ्गिकां विद्यामुपदिश्य अनन्तरं त्रिभिश्श्लोकैः केवलकर्मावलम्बिनः केवलविद्यावलम्बिनश्च पुरुषान्विनिन्दन्वर्णाश्रमधर्मानुगृहीतया विद्ययैव निश्श्रेयसावाप्तिमाह—**अन्धं तमः प्रविशन्तीति** । बृहदारण्यके चायं मन्त्रः पठितः । **ये**-भोगैश्वर्यप्रसक्ताः, **अविद्यां** विद्यान्यां क्रियां केवलकर्मेत्यर्थः । विद्याविधुर कर्मेति यावत् । 'अविद्या कर्मसंज्ञान्या तृतीया शक्तिरिष्यते' इति स्मृतेः । **उपासते**—एकान्तमनसोऽनुतिष्ठन्ति, ते **अन्धं तमः**-अतिगाढ तमः अज्ञानमित्यर्थः । त्रिवर्गाभिषङ्गानान्तरीयं नारकं तमो वा । अधीयते चाथर्वणिकाः 'प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म । एतच्छ्रेयो येऽभिनन्दन्ति मूढा जरामृत्यू

श्री॥मात्मनः परिशुद्धप्रत्यगात्मस्वपि व्याप्तत्वमनादिकालाद्यथापूर्वमेव सृष्ट्यादिकर्तृत्वं चास्यां योजनायामभिहितं भवति ॥ ६ ॥ लकारव्यत्ययस्तु प्राग्वदेव बोध्यः ॥ ७ ॥ इत्यष्टममन्त्रव्याख्यानम्॥ ८ ॥

अयं मन्त्रोऽस्यामुपनिषदि काण्वैर्नवममन्त्रतया माध्यन्दिनैर्द्वादशमन्त्रतया च पठ्यते ॥ १ ॥ इतः प्राचीनेन भागेन कर्मयोगाङ्गिकां यथोक्तलक्षणज्ञानविशेषरूपां परविद्यां परमनिश्श्रेयसलक्षणमोक्षसाधनमभिधायाङ्गाङ्गिभावेन समुच्चयेनैव कर्मयोगपरविद्ययोरनुष्ठानावश्यकता ज्ञापयितुं प्रत्येक स्वातन्त्र्येण तयोरनुष्ठाने सम्भवद्विपरीतफलमाह नवमेन मन्त्रेण ॥ २ ॥

अस्य पदविवरणम् - **ये** - पुरुषाः, **अविद्याम्** - विद्येतरद्विहितं कर्मैव, अस्मिन् प्रकरणेऽविद्याशब्दो विद्येतरवर्णाश्रमविहितकर्मपर एव, उत्तरत्रैकादशमन्त्रे 'अविद्यया मृत्युं तीर्त्वा' इत्यत्रत्याविद्याशब्दसमानविषयविद्याशब्दनिर्दिष्टस्य मृत्युतरणोपायताप्रतीतेः, अज्ञानरूपतच्छब्दार्थस्य तथात्वासम्भवाच्च । उत्तरार्धस्थ उकारोऽत्राप्याकर्षणीयः, उत्तरार्धानुरोधादेकमात्रानुष्ठानस्यैवात्रापि प्रतिपिपादयिषितत्वात् । स चैवकारार्थकः । न चाविद्याशब्दस्य विद्येतरविषयत्वे कर्मपरत्वनिर्बन्धो हि न सुवचः, विद्येतरत्वस्य विद्यातिरिक्तसर्वसाधारणत्वादिति वाच्यम्; नञा सादृश्यस्यापि बोधेन मनुष्यत्वादिसादृश्येनाब्राह्मणादिशब्दस्य ब्राह्मणभिन्नक्षत्रियादिमात्रबोधकत्ववदत्राविद्याशब्दस्याप्यदृष्टोपकारकत्वादिसादृश्येन विद्यासहचरितवर्णाश्रमा-

१. वि. पु. ६-७-६१ ॥
२. मुण्डको. १-२-७ ॥
३. श्वे. उप. ६-१९ ॥
४. मु. उप. १-२-७ ॥

**अन्यदेवाहुर्विद्यया अन्यदाहुरविद्यया ।**
**इति शुश्रुम धीराणां ये नस्तद्व्याचचक्षिरे ॥** १०

वे॥**भूय इव ते तमो य उ विद्यायाँ रताः**-कर्ममात्रनिष्ठप्राप्यादन्धतमसादधिकं तमः स्वाधिकारोचितकर्मपरित्यागेन विद्यामात्रे रताः प्रविशन्ति । इवशब्दस्तमस इयत्ताया दुर्ग्रहत्वं द्योतयति। उकार उत्तरत्रपदेनान्वेतव्यः-'विद्यायामेव रताः' इति ॥ ९ ॥

किं तर्हि मोक्षसाधनमित्यत्राह—**अन्यदेवाहुर्विद्यया अन्यदाहुरविद्ययेति** । अत्र व्यत्ययानुशासनात्पञ्चम्यर्थे तृतीया; अन्यशब्दानन्वयात् , 'अन्यदेवाहुस्सम्भवात्' इति वक्ष्यमाणसारू-

कू॥ले पुनरेवापि यन्ति' इति। **य उ विद्यायां रताः**-उकार उत्तरपदेनान्वेतव्यः।ये स्वाधिकारोचितकर्मपरित्यागेन विद्यायामेव रताः- ते, **ततः** - कर्ममात्रनिष्ठप्राप्यान्धतमसात् , **भूय इव तमः** अधिकमज्ञानं विशन्ति । इवशब्दस्तमस इयत्ताया दुर्ग्रहत्वं द्योतयति ॥ ९ ॥

कि तर्हि मोक्षसाधनमित्यत्राह --**अन्यदेवाहुरि**ति । **विद्यये**ति पञ्चम्यर्थे तृतीया, यथाश्रुतत्वे अन्यशब्दानन्वयात् , 'अन्यदेवाहुस्सम्भवात्' इति वक्ष्यमाणानुसाराच्च । तथा-**अविद्यायाः**-कर्म-

श्री॥दिकर्ममात्रबोधकत्वसम्भवात्। **उपासते**-पुरुषार्थसाधकतयाऽनुतिष्ठन्ति। विद्यामन्तरेण केवलकर्मैव पुरुषार्थसाधकत्वाभिमानेनानुतिष्ठन्तीत्यर्थः । अत्र यच्छब्दानुरोधात्तच्छब्दोऽध्याहार्यः । **ते**-पुरुषाः, **अन्धम्** - अन्धयतीत्यन्धम् - अतिगाढमिति यावत् । **तमः**-'असुर्या नाम ते लोका अन्धेन तमसा वृताः' इति प्रागुक्तं तमोलोकमेव, **प्रविशन्ति** - क्रमेण प्राप्नुवन्ति, केवलकर्मणां राजसतामसप्राकृतैश्वर्यभोगमात्रहेतुतया क्रमेण तदधीनरजस्तमोगुणाभिवृद्धेस्तदधीनायथावज्ज्ञानान्यथाज्ञानमूलविपरीतकर्मप्रवृत्तेरपि प्रसङ्गाच्च प्रागुक्तरीत्या तादृशलोकप्राप्तिप्रसङ्गोऽप्यवर्जनीय एवेति भावः । **ये** पुरुषाः, **विद्यायामु** - केवलज्ञान एव, **रताः**-निरताः,कात्स्न्र्येन कर्मयोगं त्यक्त्वा ज्ञानयोगमात्रं पुरुषार्थसाधकत्वाभिमानेनानुतिष्ठन्तीत्यर्थः । **ते**-पुरुषाः, **ततः** केवलकर्मयोगमात्रानुष्ठायिपुरुषेभ्यः, **भूय इव**-भूय एव अधिकमेव इवकारोऽत्रैवकारार्थकः, निपातानामनेकार्थत्वात् । 'अन्धं तमः प्रविशन्ति'इत्यन्वय इति बोध्यम् ॥ ३ ॥ केवलकर्मानुष्ठायिना नित्यनैमित्तिककर्मप्रहाणाभावेन तदधीनप्रत्यवायप्रसङ्गाभावाच्छनैश्शनैरेव भूयसा कालेन रजस्तमोगुणाभिवृद्धिमूलविपरीतकर्मप्रवृत्तिनिबन्धनपातकप्रसङ्गसम्भवात् , प्रथमत एव कात्स्न्र्येन कर्मप्रहाणपूर्वकं केवलविद्यानुष्ठायिना प्राथमिकपादप्रक्षेपप्रभृत्येवावश्यकर्तव्यनित्यनैमित्तिककर्मप्रहाणनिबन्धनपापपरंपराप्रसङ्गसम्भवाच्च तेभ्योऽप्येतेषामचिरेणैव विपरीतफलप्राप्तिरिति भावः ॥ ४ ॥ अन्यदत्र वक्तव्यं सर्वमेकादशमन्त्रव्याख्याने वक्ष्यामः ॥ ५ ॥ इति नवममन्त्रव्याख्यानम् ॥ ९ ॥

अस्मिन्मन्त्रे तृतीयान्तयोर्विद्याविद्याशब्दयोः स्थाने पञ्चम्यन्तौतौ, 'व्याचचक्षिरे' इति स्थाने 'विचचक्षिरे' इति शब्द च माध्यन्दिनाः पठन्ति॥ १॥ मुमुक्षोः कर्मणा सह विद्याया अङ्गाङ्गिभावेनानुष्ठानस्यैव स्थापनीयतया तयोरैकानुष्ठानानौचित्यप्रतिपादनमन्तरेण तदसम्भवात्तत्र विपरीतफलप्राप्तिप्रतिपादनरूपेणैकेन प्रकारेण पूर्वमन्त्रे तदनौचित्यं प्रतिपाद्य पुनरवान्तरफलभेदप्रतिपादनरूपेण प्रकारान्तरेणापि तदनौचित्य प्रतिपादयति दशमेन मन्त्रेण ॥ २ ॥ अस्य पदविवरणं—**विद्यया** यथोक्तलक्षणज्ञानरूपपरविद्यया । **अन्यदेव**—अविद्याशब्दितकर्मयोगसाध्यफलादन्यदेव फलं । 'पू-

वे॥ध्याच्च। केवलकर्मणः कर्मनिरपेक्षविद्यातश्चान्यन्मोक्षसाधनमित्युक्त भवति। **आहुः**—पूर्वाचार्या इति शेषः। औचित्यादुपनिषद इति वा। पूर्वपूर्वसम्प्रदायसिद्धोऽस्माकमयमर्थ इत्याह—**इति शुश्रुम धीराणां ये नस्तद्व्याचचक्षिरे-ये**-पूर्वाचार्याः, **नः**-प्रणिपातादिभिस्सम्यगुपसन्नानामस्माकम्, **तत्**-मोक्षसाधनम्, **व्याचचक्षिरे**-विविच्योपादिक्षन्। तेषां, **धीराणां**-परमात्मध्यानपराणां; वचनमित्यध्याहार्यम्। 'नटस्य शृणोति' इतिवद्वा कथञ्चित्पञ्चम्यर्थे षष्ठी। **इति शुश्रुम** एवंप्रकारमश्रौष्म। ब्रह्मविद्याया दुरवगाहत्वेन निश्शेषग्रहणाशक्यत्वाभिप्रायोऽत्र लिडुत्तमः॥ १०॥

---

कृ॥रहितविद्यातः, **अन्यत्**-मोक्षसाधनमित्याहुः। उपनिषद इति शेषः। **अविद्ययेति** पूर्ववत्पञ्चम्यर्थे तृतीया। अविद्यातः ब्रह्मज्ञानविधुरकर्मणश्चान्यदेव मोक्षसाधनमित्याहुरुपनिषद इति भावः। पूर्वपूर्वसम्प्रदायसिद्धोऽर्थोऽयमस्माकमित्याह—**इति शुश्रुमेति**। **ये**-पूर्वाचार्याः-**नः**-प्रणिपातादिभिस्सम्यगुपसन्नानामस्माकं, **तत्** - मोक्षसाधन, **व्याचचक्षिरे**-विविच्योपादिशन्, तेषां **धीराणां**-धीमताम्।पञ्चम्यर्थे षष्ठी।तेभ्यो धीरेभ्य इति योजनीयम्, 'नटस्य शृणोति' इति वत्। नटाच्छृणोतीत्यर्थः। 'इति शुश्रुम' एव प्रकारमश्रौष्म-ननु परोक्षएवार्थे लिड्विधानात 'शुश्रुम' इति लिडुत्तमपुरुषो न घटत इति चेत्—मैव, ब्रह्मविद्याया दुरवगाहत्वेन निश्शेषग्रहणमस्माभिर्न कृतमित्यभिप्राय कृत्वा लिडुत्तमस्योपपत्तेरित्याहुः॥ १० ॥

---

श्री॥र्वे ब्रह्मविदः' इति शेषः। **आहुः**-वदन्ति। एवम्, **अविद्यया**- कर्मयोगेन। **अन्यदेव**-पूर्व एवकारोऽत्राप्यनुषज्यते। विद्यासाध्यफलादन्यदेव फलम् **आहुः**। **धीराणां** - ब्रह्मविदाम्। **इति** - एवं भूतं वचनम्। **शुश्रुम** - अश्रौष्म। के ते ब्रह्मविदः? येभ्य इत्थभूतं वचन श्रुतमित्यत्राह—**य** इत्यादि। **ये**-ब्रह्मविदोऽस्मदाचार्यभूताः। **नः**-अस्मभ्यं। **तत्** - विद्याविद्ययोः फलभेदविषयं वचनम्। **व्याचचक्षिरे** - उपादिक्षन्। पूर्वपूर्वब्रह्मवित्संप्रदायपरंपराप्राप्तमेवामुमर्थं विधिवदुपसन्ना वयं यथावदुपासितेभ्यस्स्वाचार्येभ्य एवाश्रौष्म, न तु प्रामाणिकत्वाप्रामाणिकत्वनिश्चयानर्हसाधारणलोकमुखात्। अतः परमार्थभूत एवायमिति भावः। 'शुश्रुम - व्याचचक्षिरे' - इत्युभयत्रापि लुङर्थे केवलभूते लिट्,भूतानद्यतनपरोक्षार्थस्येहासम्भवात्।'छन्दसि लुङ् लङ् लिटः' ॥३॥४॥६॥ इत्यनुशासनेन लुङर्थेऽपि छन्दसि लिड्भवतीति न विरोध इति बोध्यम्॥ ३ ॥ इदमत्र तात्पर्यम्-अविद्याशब्दितस्य कर्मणस्तत्तदसाधारणफलाभिसन्धिपूर्वकमनुष्ठितस्य तत्तदैहिकामुष्मिकपुत्रपश्वादिस्वर्गादिरूपप्राकृतभोगैश्वर्यलक्षण फलम्; तत्तदसाधारणफलाभिसन्धिमन्तरेण मुमुक्षुणाऽनुष्ठितस्य तस्य विद्योत्पत्त्युपचयविरोधिमृत्युशब्दितपुण्यापुण्यकर्मनिवृत्तिमात्र च फलं; विद्यायास्त्वमृतशब्दितब्रह्मप्राप्तिः फलं, तथाच-विद्यासाध्यफलादविद्यासाध्यफलम्, अविद्यासाध्यफलाद्विद्यासाध्यफलं च परस्परं भिन्नमेव; तत्र प्रथमफलहेतुभूतस्य कर्मणः केवलस्यानुष्ठानं पूर्वमन्त्रोक्तरीत्या मोक्षविरोधिफलहेतुत्वादन्ततोऽन्धतमसप्राप्तिलक्षणमहानर्थहेतुत्वाच्च मुमुक्षोरनुपादेयमेव, द्वितीयफलहेतुभूतस्य कर्मणोऽपि केवलस्यानुष्ठानं विरोधिनिवृत्तिमात्रहेतुत्वाद्विद्याया एव ब्रह्मप्राप्तिहेतुत्वाच्च मुमुक्षोर्नाभिमतसाधने पर्याप्तं, विद्यायाः केवलाया अनुष्ठानमपि नित्यनैमित्तिककर्माननुष्ठाननिबन्धनप्रत्यवायबलेन विपरीतमहानर्थप्राप्तेर्विद्योत्पत्त्युपचयविरोधिनां पुण्यापुण्यलक्षणानां प्राचीनकर्मणां निवृत्त्यसिद्ध्या विद्यानिष्पत्तेरेवासम्भवाच्च मुमुक्षोर्नाभिमतसाधनक्षमं; तस्मान्मुमुक्षोर्विद्याविद्ययोरेकमात्रानुष्ठानमयुक्तमेव—इति ॥ ४ ॥ फलाभिसन्धिरहितमनुष्ठितस्यापि कर्मणो ज्ञानविरोधिप्राचीनकर्मनिवृत्तिः फलमिति, विद्याया ब्रह्मप्राप्तिः फलमिति च फलभेदः-'अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते' इत्युत्तरमन्त्रे व्यक्तीभविष्यति ॥ ५ ॥ अत्रान्यपदयोर्द्वयोरपि परस्परसमभिव्याहृतविद्याऽविद्यासाध्यफलभेदपरतायास्स्वरसत

श्री॥एव लाभेमान्यपदानन्वयहेतुना विद्याविद्याशब्दगततृतीययोश्छान्दसव्यत्ययेनावधिपञ्चम्यर्थपरतास्वीकारेण केषाञ्चिद्व्याख्यानमयुक्तमेव ॥ ६ ॥ एवम्-'अन्यदेवाहुस्सम्भवात्' इति वक्ष्यमाणमन्त्रनिर्देशस्येह तृतीयाया अवधिपञ्चम्यर्थपरतास्वीकारगमकत्ववर्णनमप्ययुक्त--तृतीयापञ्चम्योरुभयोरपि हेतुपरतयैव स्वरसतो निर्वाहसम्भवे छान्दसव्यत्ययमाश्रित्य तृतीयाया अवधिपञ्चम्यर्थपरतास्वीकारस्यानावश्यकत्वात् ॥ ७ ॥ एतेन — माध्यन्दिनपाठेऽत्रापि विद्याऽविद्याशब्दयोः पञ्चम्यन्तताश्रवणमपि काण्वपाठसिद्धतृतीयाया अवधिपञ्चम्यर्थपरतास्वीकारगमकमित्यपि निरस्तं, तृतीयायास्स्वरसत एव हेतुपरतास्वीकारे बाधकक्लेशाविरहेण च्छान्दसव्यत्ययकल्पनस्यायुक्तत्वात् ॥ ८ ॥ एवं — 'विद्याञ्चाविद्याञ्च' इत्याद्येकादशमन्त्रे - विद्याऽविद्ययोरमृतप्राप्तिमृत्युतरणरूपे द्वे फले निर्दिश्य मुमुक्षोस्तदुभयावश्यकत्वेन तद्धेतूभयानुष्ठानमुपादेयमिति समर्थनात्तदुपष्टम्भकतयैवास्य मन्त्रस्य प्रवृत्तत्वाच्च तदैककण्ठ्यानुरोधेनाऽस्य मन्त्रस्य फलभेदप्रतिपादनपरत्वमेव स्वारसिकं, न त्वप्रसक्तस्य विद्यमानशब्दालभ्यस्याध्याहारैकलभ्यस्य मोक्षसाधनस्य विद्याऽविद्याभिन्नत्वपरत्वमित्यलं बहुना ॥ ९ ॥ नन्वत्र विद्योपदेष्टा पुरुषः कः? वेदपुरुष इति चेत्—स किं नित्यसूरिषु कश्चित्? आहोस्वित्सर्वेश्वर एव? अथवा-ऐहलौकिक एव कश्चित्पुरुषविशेषः? न तावत्प्रथमद्वितीयपक्षौ सम्भवतः - स्वतस्सिद्धसार्वकालिकसार्वज्ञ्ययोर्नित्यसूरिसर्वेश्वरयोः पूर्वाचार्याधीनज्ञानत्वाभावेन-'ये नस्तद्विचचक्षिरे' इत्युक्त्यसङ्गतेः। नापि तृतीयपक्षस्सम्भवति-अर्वाचीनैहलौकिकपुरुषोपदेशवचनरूपत्वे वेदस्यानित्यताप्रसङ्गात्, पौरुषेयत्वनिबन्धनभ्रमप्रमादविप्रलम्भमूलत्वसम्भावनार्हतया स्वतस्सिद्धसुदृढप्रामाण्यविलयप्रसङ्गाच्चेति चेन्न, नित्यानामेव सतां वेदानां स्वाभिप्रायावेदकस्वोपदेशवचनरूपतया तपोविशेषशालिनश्चिरोपासितसदाचार्यसम्प्रदायप्राप्तसकलार्थस्य लोकरक्षार्थभगवत्कटाक्षविशेषनिश्शेषनिर्धूताज्ञानगन्धस्यैहलौकिकस्यैव पुरुषविशेषस्य मुखादाविर्भावसम्भवात्, तथाविधस्य वेदप्रवचनकर्तृतया वेदाचार्यमात्रभूतस्य पुरुषविशेषस्य चतुर्मुखादिवत्प्रतिकल्पभाव्याधिकारिकपुरुषरूपत्वात्, वेदानां तादृशपुरुषवचनरूपतया तदभिप्रायस्यैव वेदाभिप्रायरूपतया च माननीयताया अपीश्वरशासनसिद्धतथाविधपुरुषविशेषाधिकारविशेषायत्तत्वाच्च यथोक्तदोषगन्धानवकाशात् ॥ १० ॥

तदिदं सर्वमभिप्रेत्यैवोक्तं—महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि पञ्चाशदधिकत्रिशततमे नारायणीये षोडशे चाध्याये वेदानामपौरुषेयतायास्तदितरशास्त्राणां पौरुषेयतायाश्च प्रतिपादनपरे— 'साङ्ख्यं योगः पञ्चरात्रं वेदाः पाशुपतं तथा। ज्ञानान्येतानि राजर्षे विद्धि नानामतानि वै। साङ्ख्यस्य वक्ता कपिलः परमर्षिस्स उच्यते। हिरण्यगर्भो योगस्य वक्ता नान्यः पुरातनः। उमापतिः पशुपतिश्श्रीकण्ठो ब्रह्मणस्सुतः। उक्तवानिदमव्यग्रो ज्ञानं पाशुपतं शिवः। अपान्तरतमा नाम वेदाचार्यस्स उच्यते। पञ्चरात्रस्य कृत्स्नस्य वक्ता नारायणस्स्वयम्' ॥ २२ ॥ इति प्रकरणे—'अपान्तरतमा नाम वेदाचार्यस्स उच्यते' इति ॥ ११ ॥ अत्र साङ्ख्ययोगपाशुपतानां कपिलहिरण्यगर्भाः प्रणेतारः—पञ्चरात्रस्य तु स्वयं नारायणः प्रणेतेति तेषां पौरुषेयत्वं-वेदानां तूपदेष्टृत्वेनापान्तरतमा नाम कश्चिदाचार्य एवास्ति, न तु तत्प्रणेता कश्चिदिति वेदानामपौरुषेयत्वावेदनायापान्तरतमसो नाम कस्यचित्पुरुषविशेषस्य वेदाचार्यत्वलक्षणाधिकारविशेषमात्रं च हि प्रत्यपादिषाताम्॥ १२ ॥ तस्मात् स एव च वेदपुरुषः,तादृशश्चाधिकारिकः पुरुषश्चतुर्मुखादिवद्भिन्न भिन्नएव च तदातदा प्रतिकल्पभावी, तदुपदेशवचनरूपतया तन्मुखाविर्भावमात्रेण च न वेदानामनित्यताप्रसङ्गः, नित्यानामेव सतां तेषां

**विद्यां चाविद्यां च यस्तद्वेदोभयँ सह ।**
**अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते ॥ ११**

---

वे॥'अन्यत्' इति सङ्ग्रहेणोक्तं विवृणोति—**विद्याञ्चाविद्याञ्च यस्तद्वेदोभयँ सहेति** । **यः**-यथावस्थितोपदेशवान् । **विद्यां**-परमात्मोपासनरूपाम् । **अविद्यां**-तदङ्गभूतकर्मात्मिकाञ्च एतदुभयं परस्परविरोधप्रसङ्गरहितम् । **सह वेद**-अङ्गाङ्गिनोरनुष्ठेयत्वसाम्यादुभय सह वेदेति अविशेषेण वेदनीयतोक्तिः, न पुनर्हयोपादेययोः ज्ञातव्यत्वसाम्यात् । पूर्वमविद्याया निन्दनात्तदौचित्यमिति चेत्-

---

कू॥'अन्यत्' इति सामान्येनोक्त मोक्षसाधन विवृणोति—**विद्याञ्चाविद्याञ्चेति** । **'कुर्वन्नेवेह कर्माणि'** इति श्लोके कर्मयोगस्य प्रत्यगात्मदर्शनद्वारा परभक्त्युत्पादकत्वमुक्तम्, इह तूत्पन्नभक्तियोगेन विदुषा पूर्वोक्तकर्मयोगवेष परित्यज्याहरहरनुष्ठीयमानाना नित्यनैमित्तिककर्मणा कल्मषनिबर्हणद्वारा भक्तियोगोपचायकत्वमुच्यते, सहशब्दस्वारस्यात् । अतो न पुनरुक्तता । **यः**-यथावस्थितविद्योपदेशवान् । **विद्यां**-ब्रह्मोपासनरूपाम् । **अविद्यां**-तदङ्गभूतकर्मात्मिकाञ्च एतदुभयम् । **सहवेद**-अङ्गाङ्गिभावेन सहानुष्ठेय वेदेत्यर्थः । अत्र अविद्याशब्दः क्षत्रियविषयकाब्राह्मणशब्दवत् तदन्यत्र-

---

**श्री॥**तथाऽऽविर्भावसम्भवात्; पौरुषेयत्वाभावेनैव भ्रमप्रमादादिदोषाभावाच्च नानित्यत्वाप्रामाण्यप्रसङ्गगन्ध इति न कश्चिद्विरोधः ॥ १३ ॥ इति दशममन्त्रव्याख्यानम् ॥ १० ॥

इमं मन्त्र काण्वा एकादशमन्त्रतया माध्यंदिनाश्चतुर्दशमन्त्रतया च पठन्ति ॥ १ ॥ अस्यामुपनिषदि प्रथममन्त्रे विद्यालक्षणं परावरतत्त्वज्ञान सङ्ग्रहेण मुमुक्षोरुपदिश्य ततो द्वितीयमन्त्रे—**'कुर्वन्नेवेह कर्माणि'** इति विद्याङ्गतया कर्मयोगानुष्ठानमप्यावश्यकमिति सङ्क्षेपतो दर्शयित्वा ततस्तृतीयमन्त्रे प्रथमद्वितीयमन्त्रोक्तज्ञानकर्मयोगनिष्ठाविहीनाना विपरीतफलप्राप्तिप्रदर्शनमुखेन तादृशनिष्ठावश्यकताञ्च दर्शयित्वा ततश्चतुर्थप्रभृत्यष्टमपर्यन्तमन्त्रैः प्रथममन्त्रोक्तविद्यालक्षणविज्ञाने परावरतत्त्वयाथात्म्यानुसन्धानप्रकारं मोहशोकनिवृत्तिलक्षणं तदवान्तरफलविशेषञ्च प्रदर्श्य ततो द्वितीयमन्त्रे सङ्ग्रहेणोक्तं विद्याङ्गतया कर्मणोऽपि सहानुष्ठानावश्यकत्व सम्यक् स्थापयितुं नवमदशममन्त्रयोः विद्याकर्मणोरेकैकमात्रानुष्ठान न कर्तुमर्हं, विपरीतफलप्रसङ्गात्, द्वयोरपि फलभेदात्, विद्याकर्मसाध्ययोर्द्वयोरपि फलयोर्मुमुक्षोरपेक्षितत्वेनैकमात्रानुष्ठाने तदभिमतासिद्धेश्चेत्युक्तम् ॥ २ ॥ अथ कौ तावन्मुमुक्षोरपेक्षितौ विद्याकर्मसाध्यौ फलभेदौ, तत्र किं किं फलं केनकेन साध्यते ? इत्याशङ्का विविच्य तत्प्रतिपादनेन परिहृत्य तत एव हेतोर्विद्याकर्मणोस्साहचर्येणाङ्गाङ्गिभावेन चानुष्ठानावश्यकता स्थापयत्येकादशेन मन्त्रेण 'विद्याञ्चाविद्याञ्च' इत्यादिना ॥ ३ ॥

अस्य मन्त्रस्य पदविवरण—**यः**-मुमुक्षुः । **विद्याञ्च**-यथोक्तविज्ञानविशेषलक्षणां ब्रह्मविद्यां च, **अविद्याञ्च**-विद्याभिन्नमदृष्टफलोपकारकत्वेन तत्सदृशमङ्गतया तत्प्रत्यासन्नं वर्णाश्रमादिविहित कर्मयोगञ्च तदुभय । **सह**-परस्परसहचरम् । **वेद**-जानाति । ज्ञानस्यानुष्ठानफलत्वाज्ज्ञात्वाङ्गाङ्गिभावेन सहानुतिष्ठतीत्यर्थः । कर्मणा फलाभिसन्धिपूर्वकमनुष्ठीयमानानामेव मोक्षविरोधिफलान्तरहेतुत्वेन विद्याविरोधसम्भवात्, फलाभिसन्धि परित्यज्यानुष्ठीयमानानां तेषा विज्ञानैकहेतुत्वेन विद्याविरोधविरहाच्च, फलाभिसन्धि परित्यज्य विद्याविरोधं परिहृत्याङ्गाङ्गिभावेन परस्परसाहचर्येणोभयमनुतिष्ठतीति यावत् । स इति शेषः, यत्तदोर्नित्यसम्बन्धात् । **सः**-तादृशो मुमुक्षुः । **अविद्यया - यथोक्तलक्षणेन**

**वे॥**तर्हि विद्याया अपि निन्दितताया हेयद्वयसमुच्चयोक्तिप्रसङ्गः। तथा सत्युत्तरवाक्यमपि विघटते । **अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते** इति । अयमर्थः— विद्याङ्गतया चोदितकर्मणा मृत्युं ज्ञानसङ्कोचरूप मृत्युहेतुं प्राक्तनकर्म । तीर्त्वा-निरवशेषमुल्लङ्घ्य । **विद्यया**-पूर्वोक्तपरमात्मानुदर्शनरूपया। **अमृतमश्नुते**--'एतदमृतमभयमेतद्ब्रह्म' इत्यादिषु सर्वदोषरहितत्वेन प्रतीत परमात्मान प्राप्नोतीत्यर्थः । अत्रामृतशब्दस्य मोक्षपरत्वेऽपि न पुनरुक्तिः, 'मृत्यु तीर्त्वा' इत्यस्य उपायविरोधि-

**कू॥**त्या विद्याङ्गकर्मविषय इति भावः। **अविद्यया** विद्याङ्गरूपतया चोदितेन कर्मणा,**मृत्युं**-विद्योत्पत्तिप्रतिबन्धकभूत पुण्यपापरूप प्राक्तन कर्म । **तीर्त्वा**-निरवशेषमुल्लङ्घ्य, **विद्यया**-परमात्मोपासनरूपया । **अमृतमश्नुते**-मोक्षं प्राप्नोतीत्यर्थः । 'तीर्त्वा' इत्यत्र उपायविरोधितरणमुच्यते । 'अमृतमश्नुते' इति तु उपेयब्रह्मप्राप्तिविरोधिभूतेभ्यस्सर्वपापेभ्यो मोक्ष इति भेदः । एवञ्च सति 'इयाज सोऽ-

**श्री॥**कर्मणा। **मृत्युं**-विद्योत्पत्तिविरोधि पुण्यपापरूपं प्राचीन कर्म। **तीर्त्वा** व्यपोह्य । **विद्यया**-ब्रह्मविद्यालक्षणेन विज्ञानेन । **अमृतं** - ब्रह्म । **अश्नुते**-प्राप्नोति--इति ॥ ४ ॥

अत्राविद्याशब्दस्य कर्मपरता - मृत्युशब्दस्य ज्ञानोत्पत्तिविरोधिपुण्यपापरूपप्राचीनकर्मपरता-अमृतशब्दस्य ब्रह्मपरता च श्रीभाष्यकारैरेव जिज्ञासाधिकरणश्रीभाष्ये भाषिता ॥ ५ ॥ यथोक्त तत्र-'अत्राविद्याशब्दाभिहित वर्णाश्रमविहित कर्म , अविद्यया-कर्मणा, मृत्यु-ज्ञानोत्पत्तिविरोधि प्राचीनं कर्म, तीर्त्वा--व्यपोह्य, विद्यया-ज्ञानेन, अमृत ब्रह्म प्राप्नोतीत्यर्थः । मृत्युतरणोपायतया प्रतीताऽविद्या विद्येतरद्विहित कर्मैव' इत्यादि ॥ ६ ॥ तथा च-मृत्युशब्दितविद्यानिष्पत्तिविरोधिपुण्यपापरूपप्राचीनकर्मनिबर्हणमविद्याशब्दितवर्णाश्रमविहितकर्मफलम् । अमृतशब्दितब्रह्मप्राप्तिश्च विद्याफलम् । तत्र प्रथमफलमन्तरेण विद्यानिष्पत्त्ययोगात् , तदभावे परमपुरुषार्थभूतब्रह्मप्राप्तिलक्षणद्वितीयफलासिद्धेश्च प्रथमफलसाधनभूतवर्णाश्रमविहितकर्मलक्षणाऽविद्या द्वितीयफलसाधनभूतविज्ञानलक्षणा विद्या चेत्युभयोरपि परस्परविरोधप्रसङ्गपरिहारपूर्वकमङ्गाङ्गिभावेन साहचर्येणानुष्ठानम्मुमुक्षोरवश्यापेक्षितमिति भावः ॥ ७ ॥

न च —'अपिचेदसि पापेभ्यस्सर्वेभ्यः पापकृत्तमः । सर्वं ज्ञानप्लवेनैव वृजिनं सन्तरिष्यसि ॥ यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन । ज्ञानाग्निस्सर्वकर्माणि भस्मसात्कुरुते तथा ॥ न हि ज्ञानेन सदृशं पवित्रमिह विद्यते' ॥ इति गीताचतुर्थाध्यायवचनैर्ज्ञानस्यैव सर्वकर्मनिबर्हणसामर्थ्यावगमात् , 'तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्थाः' ॥ श्वे ॥ ३ ॥ इति श्रुत्यापि ज्ञानस्यैव मृत्युतरणोपायताप्रतिपत्तेश्च, मृत्युतरणं कर्मलक्षणाविद्यासाध्य फलम् , ब्रह्मप्राप्तिस्तु विद्यासाध्य फलमिति विद्याविद्ययोर्व्यवस्थितफलभेदकल्पनम् , ततश्च तयोरङ्गाङ्गिभावेन साहचर्येणावश्यानुष्ठेयत्वकथनञ्च कथं सङ्गच्छत इति वाच्य,विद्यानिष्पत्त्यनन्तरं ब्रह्मप्राप्तिविरोधिसर्वकर्मणा तया निबर्हणसम्भवेऽपि विद्योत्पत्तिविरोधिप्राचीनकर्मणा स्वयमनिष्पन्नया तया पूर्वमेव निबर्हणायोगेन तन्निबर्हणस्य दर्शितशास्त्राभिप्रेतत्वासम्भवात् , तन्निबर्हणपूर्वकविद्यानिष्पत्तेरनभिसहितफलानुष्ठितवर्णाश्रमविहितकर्मयोगाधीनतायाश्शास्त्रेणैव सिद्धत्वाच्च, ब्रह्मप्राप्तेर्विद्योत्पत्तिविरोधिप्राचीनकर्मनिबर्हणस्य च विद्याविद्ययोर्व्यवस्थितफलरूपतायाः तत एव हेतोस्तयोस्साहचर्येणानुष्ठेयतायाश्चाभिधाने क्षतिलेशादर्शनात् ॥ ८ ॥ अत एव - 'न हि ज्ञानेन सदृशं पवित्रमिह विद्यते' इत्युक्त्यनन्तरमेव-'तत्स्वयं योगसंसिद्धः कालेनात्मनि विन्दति' इति तादृशं ज्ञानं चिरकालानुष्ठितानभिसंहितफलकर्मयोगाधीनविद्योत्पत्तिविरोधिप्राचीनक-

१. छा. उप. ४-१५-१ ॥ | २ वि. पु. ६-६-१२ ॥

वे॥तरणपरत्वात्, 'अमृतमश्नुते' इति प्राप्तिविरोधिनिवृत्तिलाभोक्तेः। अत्र 'अविद्यया मृत्युं प्राप्य स्थिताः' इति व्याचक्षाणाः निर्बाधं पदवाक्यस्वारस्यमुपबृंहणञ्च प्रस्मृत्य स्वाविद्यया स्वयमेव मृत्यु प्राप्य-स्थिताः। एतदेव वाक्यमनुसहित वैष्णवे पुराणे 'इयाज सोऽपि सुबहून्यज्ञान् ज्ञानव्यपाश्रयः। ब्रह्मविद्यामधिष्ठाय तर्तुं मृत्युमविद्यया' इति। इह त्वविद्याशब्दः प्रकरणादौचित्याच्च विद्याङ्गकर्मविषय इत्यभापि भाष्यकारैः 'अत्राविद्याशब्दाभिहितं वर्णाश्रमविहितं कर्म' इति, 'मृत्युतरणोपायतया प्रतीताऽविद्या विद्येतरद्विहित कर्मैव' इति च। विद्या पर्युदस्यन्नयमविद्याशब्दः क्षत्रियादिविषयाब्राह्मणशब्दादिवदासन्नतदनन्तरवृत्तिरङ्गकर्मविषय इति भावः। एव 'तपो विद्या च विप्रस्य निःश्रेयसकरावुभौ। तपसा कल्मष हन्ति विद्ययाऽमृतमश्नुते' इत्याद्युपबृंहणान्यपि सुसङ्गतानि भवेयुः। ये पुनरिह विद्याकर्माख्यसाधनद्वयसमुच्चयं मृत्युतरणामृतत्वप्राप्तिरूपसाध्यद्वित्व च वर्णयन्ति, तेषा कर्मज्ञानयोरङ्गाङ्गिभावं विद्ययैव मृत्युतरणञ्च व्यक्त प्रतिपादयद्भिः श्रुतिस्मृतिसूत्रगणैर्यथाभाष्यमुत्तरं देयम्। विषमसमुच्चयवादेऽपि यथाभागं सन्निपत्योपकारकत्वसम्भवे गत्यन्तरगमनिका नीतिविद्भिर्न सम्मन्यते॥

---

कू॥पि सुबहून्यज्ञान् ज्ञानव्यपाश्रयः। ब्रह्मविद्यामधिष्ठाय तर्तुं मृत्युमविद्यया'। ज्ञानव्यपाश्रयः--शास्त्रश्रवणजन्यब्रह्मज्ञानवान्। सः-जनकोऽपि। ब्रह्मविद्या-निदिध्यासनरूपाम्। अधिष्ठाय-फलत्वेनाश्रित्येत्यर्थः। भक्तियोगोत्पत्तिं कामयमान इति यावत्। मृत्युं-भक्त्युत्पत्तिविरोधि प्राचीन कर्मजातम्। अविद्यया-अनभिसंहितफलेन विद्याङ्गकर्मणा। तर्तुं व्यपोहितुम्। सुबहून् यज्ञान्-ज्योतिष्टोमादिकान्। इयाज-अकरोदित्यर्थः। 'पाक पपाच' इतिवत्। यथा 'कषायपक्तिः कर्माणि ज्ञानं तु परमा गतिः'। परमभगवदाराधनरूपाणीत्यनभिसंहितस्वर्गादिफलानि कर्माणि कषायस्य उभयविधपापस्य तज्जन्यरागद्वेषादेर्वा पक्तिः विनाशकारणानि। ज्ञानं तु परमागतिः परमगतिसाधनमित्यर्थः। उभयत्रापि करणे कार्योपचारः। 'कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्तते' 'तपो विद्या च विप्रस्य निःश्रेयसकरावुभौ। तपसा कल्मषं हन्ति विद्ययाऽमृतमश्नुते' इत्यादीन्युपबृंहणशतानि सुसङ्गतानि भवेयुः॥

---

श्री॥र्मनिबर्हणरूपसंसिद्धिमानेव विन्दतीत्यभिहितम्॥९॥ अत एव गीताशास्त्रेऽष्टादशाध्यायान्ते वर्णाश्रमप्रतिनियतकर्मणा विविच्य प्रतिपादनानन्तरं 'स्वेस्वे कर्मण्यभिरतस्संसिद्धिं लभते नरः। स्वकर्मनिरतस्सिद्धिं यथा विन्दति तच्छृणु' ॥ १८ ॥ ४५ ॥ इत्यादिना ग्रन्थेनानभिसंहितफलानुष्ठितस्वस्ववर्णाश्रमधर्मलक्षणकर्मयोगस्य विद्योत्पत्तिरूपमर्वाचीनफलं विद्यानिष्पत्तिद्वारा ब्रह्मप्राप्तिलक्षणं परमफलं च प्रति हेतुत्वं प्रतिपादयता भगवता वासुदेवेनैव विद्याविद्ययोर्यथोक्तलक्षणफलभेदहेतुत्वेनाविद्याया अपि परमफलप्रयोजकत्वसद्भावेन च हेतुना तयोस्साहचर्येणाङ्गाङ्गिभावेनानुष्ठेयत्वमेव दर्शितम्॥ १० ॥ एवं श्रीविष्णुपुराणेऽपि 'इयाज सोऽपि सुबहून् यज्ञान् ज्ञानव्यपाश्रयः। ब्रह्मविद्यामधिष्ठाय तर्तुम्मृत्युमविद्यया' ॥ ६ ॥ ६ ॥ १२ ॥ इति वचनेनापि साक्षादेतन्मन्त्रोपबृंहणभूतेनायमर्थस्सपष्टमभिहितः॥ ११ ॥ अत्र—आगमोत्थब्रह्मज्ञानाश्रयः केशिध्वजो ब्रह्मप्राप्तिहेतुभूता ब्रह्मविद्या प्रीतिरूपापन्नदर्शनसमानाकारध्रुवानुस्मृतिशब्दितब्रह्मध्यानधारारूपा साध्यत्वेनोद्दिश्य तत्सिद्धये तद्विरोधिप्रा-

---

१. वि. पु. ६-६-१२ ॥
२. श्रीभाष्ये. १-१-१ ॥ लघुसिद्धान्ते ॥
३. श्रीभाष्ये. १-१-१ ॥
४. मनु. १२-१०४ ॥
५. भारते.
६. भारते.
७. मनुस्मृतौ. १२-१०४ ॥

श्री॥चीनकर्मलक्षणम्मृत्युं फलाभिसन्धिरहितवर्णाश्रमविहितकर्मयोगलक्षणाविद्यया तर्तुं बहून् यज्ञानकार्षीदिति ह्युक्तम् ॥ १२ ॥ एवं—'तपो विद्याच विप्रस्य निश्श्रेयसकर परम् । तपसा किल्बिषं हन्ति विद्ययाऽमृतमश्नुते' ॥१२ ॥ १०४ ॥ इति मनुवचनेनापि साक्षादेतच्छ्रुत्युपबृंहणभूतेनायमर्थ उक्तः॥ १३ ॥ एवं —'धर्मेण पापमपनुदति' ॥ ६ ॥ ६३ ॥ इति तैत्तिरीयोपनिषदि षष्ठप्रश्ने नारायणे त्रिषष्टितमानुवाकगतश्रुत्यैककण्ठयात् 'अविद्यया मृत्युं तीर्त्वा' इत्यत्र मृत्युशब्दो विद्योत्पत्तिविरोधिप्राचीनसुकृतदुष्कृतरूपद्विविधकर्मपरः, मोक्षविरोधित्वाविशेषेणात्रत्यपापशब्दस्योभयपरतााया एव विवक्षितत्वात् ॥ १४ ॥ न चैवं सति-'कर्मणा पितृलोको विद्यया देवलोकः' ॥ बृ ॥ ३ ॥ ५ ॥ १६॥ इति बृहदारण्यकश्रुतिविरोधः, कर्मविद्ययोः परस्परविरुद्धफलकत्वावगमादिति वाच्य, तादृशश्रुतौ कर्मशब्दस्य फलाभिसन्धिसहितकेवलस्वयप्रधानपुण्यकर्मविषयत्वात् तावता फलाभिसन्धिरहितकर्मणां पराविद्याङ्गतया तदन्तर्भूतानामनुष्ठाने विरोधाभावात्, विनियोगपृथक्त्वेन फलाभिसन्धिसहितकर्मणा तद्रहितकर्मणाञ्च फलभेदस्य शास्त्रेणैव सिद्धत्वाच ॥ १५ ॥ यथा हि-'अथ ये यज्ञेन दानेन तपसा लोकाञ् जयन्ति ते धूममभिसम्भवन्ति' ॥ बृ ॥ ८ ॥ २ ॥ १६ ॥ 'अथ य इमे ग्राम इष्टापूर्ते दत्तमित्युपासते ते धूममभिसम्भवन्ति' ॥ छां ॥ ५ ॥ १० ॥ ३ ॥ इत्यादिश्रुतिभिः - 'त्रैविद्या मां सोमपाः पूतपापा यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते । ते पुण्यमासाद्य सुरेन्द्रलोकमश्नन्ति दिव्यान् दिवि देवभोगान्' ॥ गी ॥ ९ ॥ २० ॥ इत्यादिस्मृतिभिश्च कर्मणा नश्वरलोकावाप्त्यादिफले विनियोगोऽवगम्यते, तथैव 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' ॥ बृ ॥ ६ ॥ ४ ॥ २२ ॥ 'धर्मेण पापमपनुदति' ॥ तै ॥ ६ ॥ ६३ ॥ 'यक्ष्यमाणो हवै भगवन्तोऽहमस्मि' ॥ छां ॥ ५ ॥ ११ ॥ ५ ॥ इत्यादिश्रुतिभिः, भगवता वासुदेवेन गीतायामष्टादशाध्याये— '*त्याज्यं दोषवदित्येके कर्म प्राहुर्मनीषिणः । यज्ञदानतपःकर्म न त्याज्यमिति चापरे*' ॥ १८ ॥ ३ ॥ इति पक्षद्वयमुपक्षिप्य '*यज्ञदानतपःकर्म न त्याज्यं कार्यमेव तत् । यज्ञो दान तपश्चैव पावनानि मनीषिणाम्*' ॥ १८ ॥ ५ ॥ इति मुमुक्षूणामपि विद्याविरोधिपापनिवर्तकत्वरूपपावनत्वेन हेतुना कर्मणामनुष्ठेयत्वपक्षस्यैव सिद्धान्तितत्वात्, तृतीयाध्यायेऽपि 'कर्मणैव हि संसिद्धिमास्थिता जनकादयः' ॥ ३ ॥ २० ॥ इति ज्ञान्यग्रेसरजनकादीनां कर्मानुष्ठानप्रदर्शनात्; चतुर्थाध्याये 'एवं ज्ञात्वा कृतं कर्म पूर्वैरपि मुमुक्षुभिः । कुरु कर्मैव तस्मात्त्वं पूर्वैः पूर्वतरं कृतम्' ॥ ४ ॥ १५ ॥ इति मुमुक्षूणामेव पूर्वेषामनुष्ठानप्रदर्शनपूर्वकं कर्मणोऽवश्यानुष्ठेयत्वविधानात्, 'इयाज सोऽपि सुबहून् यज्ञाञ् ज्ञानव्यपाश्रयः । ब्रह्मविद्यामधिष्ठाय तर्तुम्मृत्युमविद्यया' ॥ ६ ॥ ६ ॥ १२ ॥ इति प्रागुदाहृतविष्णुपुराणवचनात् एवंजातीयाभ्योऽन्याभ्यो बहुभ्यस्स्मृतिभ्यश्च कर्मणां पापनिवृत्तिज्ञानोत्पत्त्यादिफलेऽपि विनियोगोऽवगम्यत इति विनियोगपृथक्त्वेन बुभुक्षोर्मुमुक्षोश्च द्वयोरपि कर्मानुष्ठानं प्राप्तमेव ॥ १६ ॥

'एतान्यपितु कर्माणि सङ्गं त्यक्त्वा फलानि च । कर्तव्यानीति मे पार्थ निश्चितम्मतमुत्तमम्' ॥ १८ ॥ ६ ॥ 'अनिष्टमिष्टं मिश्रञ्च त्रिविधं कर्मणः फलम् । भवत्यत्यागिनां प्रेत्य न तु सन्न्यासिनां क्वचित् ॥ १८ ॥ १२ ॥ 'सर्वकर्माण्यपि सदा कुर्वाणो मद्व्यपाश्रयः । मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम्' ॥ १८ ॥ ५६ ॥ 'चेतसा सर्वकर्माणि मयि सन्न्यस्य मत्परः । बुद्धियोगमुपाश्रित्य मच्चित्तस्सतत भव' ॥ १८ ॥ ५७ ॥ इत्यादिभिर्वचनैर्गीताशास्त्रे फलाभिसन्धिपूर्वकमनुष्ठितकर्मणामेव स्वर्गादिफलप्राप्तिः, फलाभिसन्धिरहितमेव त्रिविधत्यागपूर्वकमनुष्ठितकर्मणां मोक्षविरोधिताादृशफलरा-

श्री॥हित्यं,परम्परया विरोधिपापनिवृत्तिज्ञानोत्पत्तिद्वारा ब्रह्मप्राप्तावेव पर्यवसानं चेति प्रतिपादयता भगवता वासुदेवेनैव—बुभुक्षुभिरनुष्ठेयानि फलाभिसन्धिसहितकर्माणि, मुमुक्षुभिरनुष्ठेयानि फलाभिसन्धिविधुरत्रिविधत्यागसहितकर्माणि—इति कर्मद्वैविध्यमपि सम्यगुपपादितम् ॥ १७ ॥

अतः-'कर्मणा पितृलोकः' इत्यत्र कर्मशब्दः फलाभिसन्धिसहितविद्यानन्तःपातिकर्मविषयः, इहाविद्याशब्दः फलाभिसन्धिविधुरत्रिविधत्यागसहितविद्यान्तःपातिकर्मविषय इति न कश्चिद्विरोधगन्धः ॥ १८ ॥

अत्र पितृलोकशब्दः-उपलक्षणविधया वा पितृशब्दविवक्षितकर्मफलानुभवितृलोकत्वेन वा ब्रह्मलोकपर्यन्तसर्वपुण्यलोकात्मकान्तरिक्षलोकमात्रपरः- 'अथ त्रयो वाव लोका मनुष्यलोकः पितृलोको देवलोकः इति' ॥ बृ॥ ३ ॥ ५ ॥ १६ ॥ इत्येतत्प्रकरणस्थलोकत्रयनिर्देशस्य 'त्रयो लोका एत एव वागेवायं लोको मनोऽन्तरिक्षलोकः प्राणोऽसौ लोकः' ॥ बृ ॥ ३ ॥ ५ ॥ ४ ॥ इति पूर्वप्रकृतलोकत्रयनिर्देशसमानविषयत्वात्, ईक्षतिकर्माधिकरणे त्रित्वेन लोकनिर्देशघटकान्तरिक्षलोकशब्दस्य चतुर्मुखलोकपर्यन्तोपरितनसर्वपुण्यलोकपरताया भाष्यकारैर्निर्णीतत्वाच्च ॥ १९ ॥

'विद्यया देवलोकः'इत्यत्र देवलोकशब्दस्तु सर्वपुण्यलोकोत्तीर्णपरमपदाख्यनित्यसूर्यावासभूतभगवल्लोकपरः,तद्घटकदेवशब्दस्य'यत्र पूर्वे साध्यास्सन्ति देवाः'॥यजुरारण्यके॥३॥१२॥७॥इत्युक्तनित्यसूरिलक्षणदेवपरत्वात् देवलोको वै लोकानां श्रेष्ठस्तस्माद्विद्यांप्रशंसन्ति'इत्यत्र प्रकरणविवक्षितदेवलोकस्य सर्वलोकश्रेष्ठतायाः,तत्प्राप्तिहेतुविद्यायास्सर्वप्रशस्ततायाश्चाभिधानेन'ते तं भुक्त्वा स्वर्गलोकं विशालं क्षीणे पुण्ये मर्त्यलोकं विशन्ति' ॥ गी ॥ ९ ॥ २१ ॥ 'आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन' ॥ गी ॥ ८ ॥ १६ ॥ इत्यादिषु निन्द्यमानपुण्यलोकपरत्वासम्भवात्, ईक्षतिकर्माधिकरणे आथर्वणिकश्रुतिघटकलोकत्रयनिर्देशे ब्रह्मलोकशब्दनिर्दिष्टतृतीयलोकस्य परमपुरुषलोकताया निर्णीतत्वेन तत्स्थानीयत्वात् 'तमेव विद्वानमृत इह भवति । नान्यः पन्था अयनाय विद्यते' इत्यादिनिर्देशवत् 'विद्यया देवलोकः' इति निर्देशस्यापि विद्याया एव परमपदप्राप्तिं प्रति प्रधानहेतुत्वाभिप्रायकत्वाच्च ॥ २० ॥ एतदभिप्रायेणैव चेहापि 'विद्ययाऽमृतमश्नुते' इति निर्देशः ॥ २१ ॥ न चैतावता कर्मयोगस्य विद्यां प्रति तद्द्वारा परमपुरुषार्थलक्षणमोक्षं प्रति च न प्रयोजकत्वमिति कथञ्चिदपि वक्तुं शक्यं, 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन'इत्यादिप्रागुदाहृतश्रुतिस्मृत्यादिप्रमाणगणविरोधात् 'क्रियावानेष ब्रह्मविदां वरिष्ठः'॥ मुण्ड॥ ३॥१॥४॥'यक्ष्यमाणो हवै भगवन्तोऽहमस्मि''कर्मणैव हि संसिद्धिमास्थिता जनकादयः'इत्यादिप्रमाणप्रतिपन्नब्रह्मविदाचारविरोधात्,'सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्'॥ ३॥ ४॥ २६ ॥ 'सहकारित्वेन च' ॥ ३ ॥ ४ ॥ ३३ ॥ इति सूत्राभ्यां कर्मणां विद्योपकारकत्वसहकारित्वप्रतिपादकब्रह्ममीमांसाकर्तृभगवद्बादरायणाशयविरोधाच्च ॥ २२ ॥ इत्थं सर्वत एव कर्मणां ब्रह्मविद्योपकारकत्वसहकारित्वयोः प्रतिपन्नत्वादेवेहापि—'कुर्वन्नेवेह कर्माणि' इत्यादिना 'विद्यां चाविद्यां च' इत्यादिना च ब्रह्मविदमुद्दिश्यैव ब्रह्मविद्याकर्मयोगयोरुभयोरनुष्ठानं विधीयत इति न कश्चिद्विरोधः ॥ २३ ॥ एतेन-ब्रह्मविद्याकर्मयोगयोः परस्परविरुद्धफलकत्वेन तयोरुभयोरनुष्ठानं ब्रह्मविदो न सम्भवतीत्यभिसन्धाय-'कुर्वन्नेव' इत्यादेः-'विद्यां चाविद्यां च' इत्यादेश्चाविद्वदधिकारिपरतया शङ्करतदनुयायिकृतं व्याख्यानमसमञ्जसमेव। दर्शितप्रमाणगणैः कर्मणां विद्योपकारकत्वसहकारित्वयोस्सिद्ध्या ब्रह्मविदः कर्मयोगब्रह्मविद्ययोरनुष्ठानासम्भववादस्यायुक्तत्वात्, अविद्वदधिकारिणं प्रति वक्तव्यं कृत्स्नं कर्मयोगं प्रागेव कर्मकाण्डे विविच्याभिधाय तन्निरूपणसमाप-

श्री॥नानन्तरं प्रवृत्ते ज्ञानकाण्डेऽस्मिन् पुनस्सामान्येन तं प्रति कर्मयोगविधानस्य निष्प्रयोजनत्वात्,विद्वत्प्रकरणमध्येऽविदुषः प्रसङ्गस्यैवासम्बद्धत्वात् , अविद्वदधिकारिणं प्रत्यमृतप्राप्तिप्रयोजकविद्याभिधानायोगाच्च ॥ २४ ॥ अत्र विद्यापरत्वमस्वीकृत्यार्वाचीनदेवताज्ञानपरत्वेन-'अमृतमश्नुते' इत्यस्य ब्रह्मप्राप्तिपरत्वमस्वीकृत्यार्वाचीनदेवतात्मभावप्राप्तिपरत्वेन च शङ्करकृतं व्याख्यानमप्यनुपादेयं, साक्षादेतच्छ्रुत्युपबृंहणभूतप्रमाणविरुद्धत्वात्, ब्रह्मवित्प्रकरणविरुद्धत्वाच्च ॥ २५ ॥ 'इयाज सोऽपि सुबहून् यज्ञान् ज्ञानव्यपाश्रयः । ब्रह्मविद्यामधिष्ठाय तर्तुंम्मृत्युमविद्यया' ॥ ६ ॥ ६ ॥ १२ ॥ इति विष्णुपुराणवचनं-'तपो विद्या च विप्रस्य निश्श्रेयसकरं परम् । तपसा किल्बिषं हन्ति विद्ययाऽमृतमश्नुते' ॥ १२ ॥ १०४ ॥ इति मनुवचनं च हि साक्षादेतच्छ्रुत्युपबृंहणभूतम् ॥ २६ ॥ अत्र हि 'ब्रह्मविद्यामधिष्ठाय' इत्यनेन-'परं निश्श्रेयसकरम्' इत्यनेन च दर्शितश्रुतिगतस्य विद्याशब्दस्य ब्रह्मप्राप्तिलक्षणपरमपुरुषार्थहेतुपरविद्यापरत्वम् 'अमृतमश्नुते' इति शब्दस्य तादृशपुरुषार्थपरत्वं च प्रस्फुटमेव व्याख्यातम् ॥ २७ ॥ प्रसिद्धश्चोपनिषत्सु ब्रह्मप्राप्तिलक्षणपरमपुरुषार्थपर एवामृतप्राप्तिनिर्देशो बहुधा ॥ २८ ॥ बृहदारण्यके चतुर्थाध्याये पञ्चमब्राह्मणे प्रथमादिषु चतुर्दशसु खण्डिकासु—'एष त आत्माऽन्तर्याम्यमृतः' इति । एवमन्यत्रापि च बहुलममृतशब्दो ब्रह्मपर एव प्रयुज्यते ॥ २९ ॥ एवं— 'कर्मणा पितृलोकः' इति श्रुतौ विद्याशब्दस्य देवतात्मज्ञानपरत्वमाश्रित्य तदैककण्ठ्येनात्रत्यविद्याशब्दस्यापि तत्परत्ववर्णनमप्यसङ्गतं, तथा सति कर्मविद्ययोः परस्परविरुद्धफलत्वेन समुच्चयासम्भवाभिप्रायकस्य तत्र तदश्रवणस्यात्र तत्सम्भवाभिप्रायकस्य तच्छ्रवणस्य च सन्दर्भविरुद्धत्वात् ॥ ३० ॥ कर्मसामान्यस्य ब्रह्मविद्याविरोधित्वाभिमानेनेह विद्याविद्ययोस्समुच्चयश्रवणान्नेयं श्रुतिर्ब्रह्मविद्विषया किन्त्वविद्वद्विषयैवेत्यभिप्रायेण व्याख्यानमप्यसत्, फलाभिसन्धिसहितस्य कर्मणो मोक्षविरोधितत्तदर्वाचीनफलहेतुत्वेन ब्रह्मविद्याविरोधित्वसम्भवेऽपि फलाभिसन्धिरहितप्रागुक्तलक्षणत्रिविधत्यागसहितकर्मणां प्रत्युत ब्रह्मविद्यानिष्पत्तिप्रयोजकत्वस्य प्रागुक्तप्रमाणगणसिद्धत्वेन कर्मसामान्यस्य ब्रह्मविद्याविरोधिताया असम्भावितत्वात् ॥ ३१ ॥

यदपि—बृहदारण्यकोपनिषदि षष्ठाध्याये 'किं प्रजया करिष्यामो येषां नोऽयमात्माऽयं लोकः' ॥ बृ ॥ ६ ॥ ४ ॥ २२ ॥ इति—ब्रह्मविदाङ्गार्हस्थ्यत्यागदर्शनं, श्वेताश्वतरोपनिषदि 'अत्याश्रमिभ्यः परम पवित्रं प्रोवाच सम्यगृषिसङ्घजुष्टम्' ॥ ६ ॥ २१ ॥ इति तुर्याश्रमिषु ब्रह्मविद्योपदेशदर्शनं चोपजीव्य-तादृशानामेव विद्याधिकार तेष्वग्निहोत्रादिकर्माभावेन कर्मणो विद्यानपेक्षितत्वं च निश्चित्य मुमुक्षोर्ब्रह्मविद्यानिष्ठस्य विद्यासाहचर्येण कर्मणोऽनुष्ठानप्रसङ्गाभावेन विद्याविद्ययोस्समुच्चयेनानुष्ठानविधायिनी 'विद्याञ्चाविद्याञ्च' इत्यादिरियं श्रुतिरविद्वद्विषयैवेत्यभिप्रायकं शाङ्करव्याख्यानम्॥

तदप्यसत्—सूत्रकारेण 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' ॥ बृ ॥ ६ ॥ ४ ॥ २२ ॥ इत्यादिश्रुत्या कर्मणां ब्रह्मविद्यासाधनत्वावगमादुपनिषत्सु गृहस्थानामेव प्रायशो ब्रह्मविद्यानुष्ठानदर्शनाच्च हेतोः तुर्याश्रमिणां विद्यासाधनकर्माभावेन विद्यानधिकारमेवाशङ्क्य तेषामप्यग्निहोत्रादिकर्माभावेऽपि स्वाश्रमानुगुणजपतपःप्रभृतिविद्योपकारककर्मसम्भवमुपपाद्य कथंचिदेव तेषां विद्याधिकारस्थापनाद्गृहस्थानामेव विद्यायामधिकारस्य मुख्यतयाऽवगमेन तेषां विद्यानधिकारकथायाः कर्मणां विद्यानुपकारकत्वकथायाश्च सुदूरपराहतत्वात् ॥ ३२ ॥

अत एव च श्वेताश्वतरोपनिषदि 'तपः प्रभावाद्देवप्रसादाच्च ब्रह्म ह श्वेताश्वतरोऽथ विद्वान् । अत्याश्रमिभ्यः परमं पवित्रं प्रोवाच सम्यगृषिसङ्घजुष्टम्' ॥ ६ ॥ २१ ॥ इत्येतन्मन्त्र एव पूर्वार्धे तुर्याश्र-

**अन्धं तमः प्रविशन्ति येऽसम्भूतिमुपासते ।**
**ततो भूय इव ते तमो य उ सम्भूत्याँ रताः ॥ १२**

---

**वे**॥तदेवमुपास्यं परमात्मतत्त्वं साङ्गतदुपासनरूपं च परमहित परमपुरुषार्थपर्यन्तमुपदिश्यानन्तरं त्रिभिश्श्लोकैः प्रतिबन्धनिवृत्तिपरब्रह्मानुभवरूपयोः फलपर्वणोस्समुच्चित्यानुसन्धानं विद्याङ्गत्वेनोपादेय

---

**कू**॥एवं समाधिनिष्पत्तेरनभिसंहितफलनित्यनैमित्तिककर्मसाध्यत्वमुपदिश्यानन्तरं त्रिभिश्श्लोकै र्निषिद्धनिवृत्तिरूपयोगाङ्गसाध्यत्वमाह । तत्र प्रथमं पूर्ववदेकैकमात्रनिष्ठान्विनिन्दति—**अन्धं तमः**

---

**श्री**॥मिणोऽपि श्वेताश्वतरस्याचार्यस्योपासनोपकारकतपःप्रभावशब्दितकर्मसहकारेण तत्सहकृतोपासनप्रीतभगवत्प्रसादेन च ब्रह्मविद्यानिष्पत्तिप्रतिपादनेन विद्याविद्ययोस्समुच्चयेनानुष्ठानमेव दर्शितम्॥ ३४॥ एवं तत्रैवोपरितनमन्त्रे—'वेदान्ते परमं गुह्यं पुरा कल्पे प्रचोदितम् । नाप्रशान्ताय दातव्यं नापुत्रायाशिष्यायवा पुनः' ॥ ६ ॥ २२ ॥ इत्येवंरूपे पुत्राय विद्योपदेशकर्तव्यताप्रतिपादके गृहस्थानामपि प्रत्युत विद्यायामधिकारसद्भाव एव प्रतिपद्यते ॥ ३५ ॥ अत एव च्छान्दोग्योपनिषद्यष्टमप्रपाठके पञ्चदशे खण्डे ब्रह्मविद्योपदेशान्ते गुरोर्लब्धब्रह्मविद्योपदेशस्याधिकारिणः—'कुटुम्बे शुचौ देशे' इत्यारभ्य 'स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसम्पद्यते न च पुनरावर्तते न च पुनरावर्तते' इति यावदायुषं गार्हस्थ्य एव कर्मानुष्ठानेन सहस्थितिरन्तेऽपुनरावृत्तिलक्षणब्रह्मप्राप्तिरूपपरमपुरुषार्थप्राप्तिश्चाभिहिता ॥ ३६ ॥ इत्थमेव च सूत्रकारेणापि 'कृत्स्नभावात्तु गृहिणोपसंहारः' ॥ ३ ॥ ४ ॥ ४७ ॥ इति सूत्रे सर्वेष्वाश्रमिषु विद्यासद्भावादेवात्र गृहस्थाश्रमेणोपसंहारः कृत इत्यस्याश्श्रुतेरर्थो विवृतः ॥ ३७ ॥ तस्मात् ब्रह्मविद्यायामाश्रमान्तरनिष्ठानामनधिकारात्तुर्याश्रमनिष्ठानामेवाधिकारात्कर्मणां गृहस्थाश्रममात्रविश्रान्तत्वेन तुर्याश्रमनिष्ठानां तदभावाच्च कर्मणां ब्रह्मविद्यानपेक्षितत्वेनेह विद्याविद्ययोस्सहानुष्ठानप्रतिपादनमविद्वद्विषयमेवेति शाङ्करव्याख्यानमसमञ्जसं श्रुतिविरुद्धं सूत्रकारानभिमतं चेति सिद्धम् । प्रागुदाहृतप्रमाणैर्विद्यायास्सर्वाश्रमिसाधारण्यस्यैवावगमात्, तुर्याश्रमिणामग्निहोत्रादिकतिपयकर्माभावेऽपि जपतपःप्रभृतिस्वाश्रमानुगुणकर्मसद्भावात्तत्सहकारेणैव विद्यासिद्ध्यवगमाच्च विद्यायाः कर्मसाहचर्येणानुष्ठेयत्वप्रतिपादने विरोधगन्धाभावात्, विद्वत्प्रकरणमध्येऽविदुषः प्रसङ्गलेशाभावाच्च ॥ ३८ ॥ तथाच-यथोक्तलक्षण एवार्थोऽस्याश्श्रुतेस्स्वीकर्तुमुचितो विद्वद्भिः ॥ ३९ ॥ इत्यलमतिविस्तरेण ॥ ४० ॥ इत्येकादशमन्त्रव्याख्यानम् ॥ ११ ॥

इमं मन्त्रं नवममन्त्रतया माध्यंदिनाः, द्वादशमन्त्रतया काण्वाश्च पठन्ति ॥ १ ॥ इतः पूर्वं प्राप्यपुरुषार्थोपायभूतं कर्माङ्गकब्रह्मोपासनरूपविद्यालक्षणं परमहितमभिहितम् ॥२ ॥ इतः परं पुरुषार्थानामैश्वर्यकैवल्यभगवत्प्राप्तिलक्षणानां त्रैविध्यात् - ब्रह्मविदमैश्वर्यकैवल्याभ्यामर्वाचीनपुरुषार्थाभ्यामस्थिरत्वाल्पत्वदोषदुष्टाभ्यां निवर्त्य भगवत्प्राप्तिलक्षणपरमपुरुषार्थ एव प्रवर्तयितुमितरपुरुषार्थयोर्दोषज्ञापनेन तन्निष्ठान्विनिन्द्य परमपुरुषार्थप्रयोजकेतरपुरुषार्थव्यावर्तकावान्तरफलान्तरानुसन्धानमपि विद्याङ्गतयोपादेयमिति प्रतिपाद्यते द्वादशादिभिस्त्रिभिर्मन्त्रैः ॥ ३ ॥

अत्र द्वादशस्यास्य मन्त्रस्य पदविवरणम्—ये-पुरुषाः, **असंभूतिं**—संभूतिस्सम्भवः-तस्या निवृत्तिरसम्भूतिः - विग्रहपरिग्रहनिवृत्तिरिति यावत्-तामसम्भूतिम् - उत्तरार्धस्थ एवकारार्थक उकारः प्रागिवार्थसामर्थ्यादिहापि सम्बध्यते - असम्भूतिमु-एकान्ततो विग्रहपरिग्रहनिवृत्तिमेव । **उपासते**-तन्मात्रोद्देश्यकोपासननिष्ठा भवन्तीत्यर्थः । ते-पुरुषाः । **अन्धं तमः प्रविशन्ति** - गाढमज्ञानं प्र-

अन्यदेवाहुस्सम्भवादन्यदाहुरसम्भवात् ।

वे॥मित्युच्यते । तत्र प्रथममेकैकमात्रानुसन्धान निन्दति—**अन्धं तमः रता** इति। 'एतमितः प्रेत्याभिसम्भवितास्मि' 'धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसम्भवामि' इत्यादिषु ब्रह्मप्राप्तिरूपा सम्भूतिरुक्ता । तां पर्युदस्यन्नयमसंभूतिशब्दः तदासन्नप्रतिबन्धविनाशमभिधत्ते । 'सम्भूतिं च विनाशञ्च' इत्यपि हि अनन्तरमुच्यते । तेन चात्रासम्भूतिशब्देन सम्भूतेरनुत्पत्तिः विनाशो वा प्रतिपाद्यः । अमृतप्राप्तिहेतुतयोक्तायास्सम्भूतेः प्रागभावस्य प्रध्वंसस्य वा मृत्युतरणहेतुत्वेन वक्तुमयुक्तत्वात् । अत्रापि तरतेः प्राप्तिवचनत्वं पूर्ववत्प्रतिक्षेप्यम् ॥ १२ ॥

---

कू॥**प्रविशन्तीति**। 'एतमितः प्रेत्याभिसम्भवितास्मि' 'ब्रह्मलोकमभिसम्भवामि' इत्यादिषु प्राप्तिरूपा अनुभूतिः सम्भूतिशब्देनोक्ता। इह तु समाधिरूपा सा सम्भूतिशब्देनोच्यते। असम्भूतिशब्दस्तु समाधिरूपसम्भूत्यन्यां समाध्यङ्गभूतां निषिद्धनिवृत्तिमाह । 'सम्भूतिं च विनाशञ्च' इत्युत्तरत्र विनाशशब्देनासम्भूतेरनुवादात् । तथा च ये-विद्याधिकारिणः असम्भूतिमेव मानदम्भहिंसास्तेयादीनां योगविरुद्धानां निवृत्तिमेवोपासते-निवृत्तिमात्रनिष्ठा इत्यर्थः ; ते 'अन्धं तमः प्रविशन्ति' इति पूर्ववदर्थः । ये पुनस्समाधिरूपसम्भूत्यामेव रताः, ते ततो भूय इव बहुतरमिव तमः प्रविशन्तीत्यर्थः ॥ १२ ॥

---

श्री॥विशन्ति - प्रकृष्टमज्ञानमेव प्राप्ता भवन्तीति यावत् । 'न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति । अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः' ॥ छा ॥ ८ ॥ १२ ॥ १ ॥ इति श्रुत्यनुरोधादनुभवानुरोधाच्च यावच्छरीरपरिग्रहानुवृत्ति सुखदुःखानुवृत्तिरपरिहार्या,शरीरपरिग्रहानुवृत्तिश्च यावत्प्रकृतिसम्बन्धमपरिहार्यैव । अत आत्यन्तिकशरीरपरिग्रहनिवृत्तिरेव मे भवत्वित्यभिसन्धायासम्भूतिमात्रोद्देश्यकोपासननिष्ठा ये भवन्ति—तेषां तादृशोपासनेन कैवल्यपुरुषार्थ एव पर्यवसानेन तस्य च नित्यत्वेन ततः परं कदाचिदपि भगवत्प्राप्तिलक्षणपरमपुरुषार्थानवकाशाच्च तत्प्रतिबन्धकं महदेव तमस्ते प्राप्तवन्तो भवन्तीति भावः । ये-पुरुषाः, **सम्भूत्याम्** - शरीरपरिग्रह एव, **रताः**-उपादेयत्वबुद्ध्या सक्ताः—पुनःपुनर्भोगोपकरणशरीरपरिग्रहोद्देश्यकोपासनैकनिष्ठाः, **ते, ततः**-असम्भूत्युद्देश्यकोपासननिष्ठापेक्षया, **भूय इव**—अत्यन्तमेव प्रागिवेहापीवकार एवकारार्थकः । 'तमः प्रविशन्ति' इत्यन्वयः । तदीयाज्ञानापेक्षयाऽत्यधिकमज्ञानं प्राप्तवन्तो भवन्त्येव इति यावत् । करणकलेबराद्युपकरणाभावे भोग एव न सम्भवति,अनुभवानुरोधात् । आनन्दलक्षणो भोग एव च सर्वापेक्षितः, तदर्थमेव च सर्वेषां प्रवृत्तिदर्शनात् । निर्दुःखमात्रावस्थानं च नेष्टतमम् । अत आनन्दलक्षणभोगोपकरणदेहादिपरिग्रह एव मे भवत्वित्यभिसन्धाय सम्भूतिमात्रोद्देश्यकोपासननिष्ठा ये भवन्ति, तेषां तादृशोपासनेन भोगैश्वर्यलक्षणपुरुषार्थ एव पर्यवसानेन तस्य च कैवल्यपुरुषार्थादप्यल्पत्वादस्थिरत्वाद्वर्जनीयपुनःपुनरागन्तुकदुःखमिश्रत्वाद्भगवत्प्राप्तिलक्षणपरमपुरुषार्थप्रतिबन्धकत्वाविशेषाच्च कैवल्यनिष्ठेभ्योऽप्यत्यन्ताधिकं तमः प्राप्तवन्तो भवन्त्येव इति भाव इति॥ ४ ॥ इति द्वादशमन्त्रव्याख्यानम्॥

इमं मन्त्रं दशममन्त्रतया माध्यंदिनाः पठन्ति ॥ १ ॥ 'व्याचचक्षिरे' इति स्थाने 'विचचक्षिरे'

---

१. छा. उप. ३-१४-४ ॥

२. छा. उप. ८ ॥

३. 'अभिसम्भवानि' इत्येवसर्वत्र पाठः ॥

इति शुश्रुम धीराणां ये नस्तद्व्याचचक्षिरे ॥ १३

सम्भूतिं च विनाशं च यस्तद्वेदोभयँ सह ।

विनाशेन मृत्युं तीर्त्वा सम्भूत्याऽमृतमश्नुते ॥ १४

---

वे॥अन्यदे . स्तद्विचचक्षिरे इति । अत्र तच्छब्दस्समुचितत्यानुसन्धेयतया वक्ष्यमाणद्वितयं वक्ति ॥ १३ ॥

अत्रापि 'अन्यत्' इत्युक्तं विवृण्वन्विद्याङ्गमुभयानुसन्धानमाह—सम्भूतिं...सहेति । तस्यैव फलप्रदर्शनेनावश्यकर्तव्यतां स्थापयति—विनाशेन मश्नुते इति । अनुसन्धीयमानेन-विनाशेन प्रतिबन्धमपोह्य, सम्भूत्या-अनुसन्धीयमानया ब्रह्म प्राप्नोति । सम्भूतिविनाशानुसन्धानरूपेऽङ्गे स्तुत्य-

---

कू॥किं तर्हि मोक्षसाधनमित्यत्राह—अन्यदेवाहुरिति । सम्भवात् - सम्भूतेः, असम्भवात्-असम्भूतेरित्यर्थः । केवलात्सम्भवादसम्भवाच्च अन्यदेव मोक्षसाधनमित्युपनिषद आहुः । लिङुत्तमः पूर्ववत् । स्पष्टमवशिष्टम् ॥ १३ ॥

'अन्यत्' इत्युक्तं विवृणोति—सम्भूतिश्चेति । सम्भूतिश्च-समाधिरूपब्रह्मानुभूतिश्च, विनाशश्च-मानदम्भहिंसास्तेयबहिर्मुखेन्द्रियवृत्तिविशेषरूपा ये योगविरोधिनः, तेषा विनाशं वर्जनं चेत्येतदुभयं यो विद्वान् अङ्गाङ्गिभावेन सह वेद, स विद्वान् विनाशेन निषेव्यमाणेनेति शेषः । वि-

---

श्री॥इति च ॥ २॥ अस्य त्रयोदशस्य मन्त्रस्य विवरणम्-सम्भवात् प्रागुक्तलक्षणसम्भूत्युद्देश्यकोपासनसाध्यविग्रहपरिग्रहलक्षणावान्तरफलात् , अन्यदेव-असम्भूत्युपासनावान्तरफलप्रयोज्यकैवल्यलक्षण-परमफलादन्यदेव भोगैश्वर्यलक्षणं परमं फलम् , आहुः-जायमानं प्रतिपादयन्ति, शास्त्राणीति शेषः । असम्भवात् - प्रागुक्तलक्षणासम्भूत्युद्देश्यकोपासनसाध्यात्यन्तिकविग्रहपरिग्रहनिवृत्तिलक्षणावान्तरफ - लात्, अन्यदेव-सम्भूत्युपासनावान्तरफलप्रयोज्यभोगैश्वर्यलक्षणपरमफलादन्यदेव केवलात्मानुभवलक्षणं परमं फलम् , आहुः । धीराणां - विद्वदग्रेसराणाम्, इति - इत्थंभूतं वचनं, शुश्रुम-आकर्णयामः । इहापि लडर्थे लिट् प्राग्वत् । ये धीराः अस्मदाचार्याः, नः-अस्माकं, तत् - पृथक्कृतसम्भूत्यसम्भूत्युपासनपरमफलद्वयम्, व्याचचक्षिरे-व्याख्यातवन्तः । 'विचचक्षिरे' इति पाठेऽप्ययमेवार्थ इति ॥ ३ ॥ तथाच-सम्भूत्यसम्भूत्योरेकैकमात्रोद्देश्यकोपासनकरणे द्वयोरुपासनयोः परस्पर-विलक्षणपुरुषार्थद्वयपर्यवसानेन परमपुरुषार्थलक्षणैकपुरुषार्थपर्यवसायित्व न सम्भवति ; अतः पृथगेकैकावान्तरफलस्य प्राप्यतयाऽनुसन्धानं न कर्तव्यमिति फलितम्॥४॥ इति त्रयोदशमन्त्रव्याख्यानम्॥

इमं मन्त्रमेकादशमन्त्रतया माध्यंदिनाः पठन्ति ॥ १ ॥ काण्वास्तु चतुर्दशमन्त्रतया ॥ २ ॥ अस्य मन्त्रस्य पदविवरणं-यः-पुरुषः, सम्भूतिश्च सम्भूत्युपासनफलं विग्रहपरिग्रहञ्च, विनाशञ्च-विग्रहपरिग्रहनिवृत्तिलक्षणामसम्भूत्युपासनफलभूतामसम्भूतिञ्च, तदुभयं, सह-समुच्चयेन, वेद-अवान्तरफलत्वेन प्राप्यतयोपास्ते, स इति शेषः । सः-पुरुषः । विनाशेन-असम्भूत्युपासनसिद्धकर्माधीनप्राकृतविग्रहपरिग्रहयोग्यतानिवृत्त्या, मृत्युं-ब्रह्मप्राप्तिप्रतिबन्धकं प्रकृतिसम्बन्धं, तीर्त्वा-निश्शेषमतिलङ्घ्य । सम्भूत्या-संभूत्युपासनाधीनकर्मानधीनाप्राकृतविग्रहपरिग्रहयोग्यतासिद्ध्या, अमृतं-परमपुरुषार्थरूपं परं ब्रह्म, अश्नुते-अनुभवति—इति ॥ ३ ॥

परब्रह्मानुभवस्य तदीयगुणानुभवजनितानवधिकातिशयप्रीतिकारिताशेषावस्थोचिताशेषशेषतैकरतिरूपनित्यकैङ्कर्यप्राप्तिपर्यवसायिनो विग्रहपरिग्रहमन्तरेणासम्भवेन केवलासम्भूतिप्राप्त्युद्देश्यकोपासने

वे॥र्थे यथोचितमङ्गिफलनिर्देशः।यद्वा 'विनाशेन-मृत्युं तीर्त्वा' इति पूर्वोक्तसरूपशब्दे विरूपार्थपरिहाराय विनाशशब्देन मानदम्भादीनां हिंसास्तेयादीनां बहिर्मुखेन्द्रियवृत्तीनां च विनाशो विवक्षितः। अतो विरुद्धनिवृत्तिरूपाङ्गसेवनेन समाधिविरोधिपापमपाकृत्य समाधिनिष्पत्तिरूपब्रह्मसम्भूत्या तदेवाश्नुते। अत्र सम्भूतिविनाशशब्दाभ्यां सृष्टिप्रलयादिविवक्षया मृत्युतरणामृतप्राप्तिरूपफलविभागवचनस्यौचित्यलवोऽपि नोपलभ्यते ॥ १४ ॥

---

कू॥रोधिनिवृत्तिरूपयोगाङ्गसेवनेनेत्यर्थः। **मृत्युं** समाधिविरोधिपापं; **तीर्त्वा**-अपाकृत्य, निष्पन्नया **सम्भूत्या - अमृतम् अश्नुते** - प्राप्तिरूपा सम्भूतिमेवाश्नुत इति भावः। अयमेव दम्भादिविनाशो बृहदारण्यके 'तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत्' इति बाल्यशब्देन विद्याङ्गतया विहितः। अत्र सम्भूतिविनाशशब्दाभ्यां सृष्टिप्रलयविवक्षया कार्यहिरण्यगर्भस्य अव्याकृतप्रधानस्य चोपासनं विधीयत इति शाङ्करव्याख्यानमनुपपन्नं, तथा सति मृत्युतरणामृतत्वप्राप्तिरूपफलवचनानौचित्यादिति ॥ १४ ॥

---

श्री॥च सामान्यतोऽशरीरत्वस्यैव सिद्ध्या कैवल्यपुरुषार्थ एव पर्यवसानाद्विग्रहपरिग्रहयोग्यताया एव विलयेन तदर्थे सम्भूत्युपासनस्याप्यावश्यकत्वात्, सम्भूत्यसम्भूत्युपासनयोर्द्वयोरप्यनुष्ठाने च असम्भूत्युपासनस्य सम्भूत्युपासनाविरोधाय दुःखहेतुतया प्राक्परिचितकर्माधीनप्राकृतविग्रहपरिग्रहयोग्यताविलय एव पर्यवसानसम्भवात्, सम्भूत्युपासनस्यासम्भूत्युपासनाविरोधाय कर्माधीनप्राक्परिचितदुःखहेतुप्राकृतशरीरविलक्षणाप्राकृतदुःखादिदोषगन्धानर्हदिव्यविग्रहपरिग्रहयोग्यतासिद्धावेव पर्यवसानसम्भवाच्चास्थिरत्वाल्पत्वादिदोषसम्भिन्नैश्वर्यकैवल्यपुरुषार्थपर्यवसानमन्तरेण भगवत्प्राप्तिरूपपरमपुरुषार्थलक्षणमोक्ष एव पर्यवसानं ब्रह्मविदस्सम्भवति; अतस्संभूत्यसंभूत्युभयोद्देश्यकमेवोपासनमावश्यकमिति भावः॥

भगवत्प्राप्तिलक्षणपरमपुरुषार्थरूपपरममोक्षभागिनां कर्मानधीनैच्छिकानेकविग्रहपरिग्रहयोग्यताऽस्तीति तु - 'स एकधा भवति त्रिधा भवति पञ्चधा' ॥ छा ॥ ७ ॥ २६ ॥ २ ॥ इत्यादिश्रुतिसिद्धम् ॥ ५ ॥ अत एव च — सूत्रकारेणापि चतुर्थाध्यायचतुर्थपादेऽभावाधिकरणे—मुक्तस्य सङ्कल्पमात्रतश्शरीरेन्द्रियादिपरिग्रहतदभावौ भवत इति—कर्मनिमित्तशरीरस्यैव प्रियाप्रियहेतुत्वादिच्छाधीनशरीरस्य तदभावाच्च न दुःखगन्धप्रसङ्ग इति; एवं च सति मुक्तस्य 'आत्तो वै सशरीरः प्रियाप्रियाभ्याम्। न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति। अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः' ॥ छां ॥ ८ ॥ १२ ॥ १ ॥ इत्यादिरशरीरत्वप्रतिपादनपरा श्रुतिः कर्मनिमित्तशरीराभावपरा; 'स एकधा भवति त्रिधा भवति पञ्चधा' ॥ छां ॥ ७ ॥ २६ ॥ २ ॥ इत्यादिस्सशरीरत्वप्रतिपादनपरा श्रुतिः कर्मानधीनसङ्कल्पमात्राधीनविग्रहपरिग्रहपरा, अतो न परस्परविरोध इति च राद्धान्तितम् ॥ ६ ॥ तस्माद्भगवत्प्राप्तिलक्षणपरममोक्षनिष्ठस्य सम्भूत्यसम्भूत्युभयोद्देश्यकमेवोपासनमावश्यकमिति श्रुतेरभिप्रायः ॥ ७ ॥ यद्यपि—'तस्य सर्वेषु लोकेषु कामचारो भवति' ॥ छां ॥ ७ ॥ २५ ॥ २ ॥ इत्यादिश्रुतिभिः प्राकृतलोकेष्वपि मुक्तानां कामचारप्रतिपादनात्साधारणयोगिमात्रपरकायप्रवेशादिशक्तेः 'सर्वमाप्नोति सर्वशः' ॥ छां ॥ ७ ॥ २६ ॥ २ ॥ इति श्रुतिबलेन तेषामपि दुरपह्नवतया कर्माधीनपरकीयप्राकृतशरीरप्रवेशस्यापीच्छया कदाचित्सम्भवेन कर्माधीनप्राकृतशरीरसम्बन्धाभावपर्यवसिताप्यसम्भूतिस्तेषां दुरुपपादा ॥ ८ ॥ तथापि तादृशशरीरसम्बन्धस्य तेषामिच्छामात्राधीनत-

---

१. बृ. ५-५-२ ॥

श्रि॥या तत्प्रयोज्यकर्माधीनफलभोगस्य.तेषामसम्भवेन स्वप्रयोज्यकर्माधीनफलभोगाश्रयत्वसम्बन्धेन शरीरसम्बन्धाभावरूपा ह्यसम्भूतिस्तेषां सूपपादैवेति नोक्तानुपपत्तिरित्यवधेयम् ॥ ९ ॥ सिद्धान्ते कपालत्वावस्थायाः प्राक् स्थितघटत्वावस्थानिवृत्तिरूपाया एव तद्ध्वंसरूपत्वाङ्गीकारेणातिरिक्तध्वंसाख्यपदार्थस्यैवानङ्गीकारादसम्भूतेरपि प्राक् स्थितप्राकृतशरीरपरिग्रहरूपसम्भूत्यवस्थानिवृत्तिरूपत्वेन तद्विनाशरूपत्वादेव विनाशशब्देन तन्निर्देशः ॥ १० ॥

यत्पुनरत्र—सम्भूत्यसम्भूत्युपासनयोर्व्याकृताव्याकृतलक्षणप्रकृतितत्त्वोपासनपरं शाङ्करं व्याख्यानम् ॥ ११ ॥ तदसमञ्जसम्—ईट्टच्छब्दितस्य परस्य ब्रह्मणस्त्वेतरसर्वचेतनाचेतनविलक्षणत्वसर्वात्मकत्वादिप्रतिपादनेन सर्वोत्कृष्टत्वं प्रतिपाद्य'मुमुक्षोस्तदुपासनमेव कर्तव्यं नान्यस्य' इति प्रतिपादनपरतया ब्रह्मविद्यैकपरेऽस्मिन् प्रकरणे मध्ये पूर्वोत्तरग्रन्थसङ्गतिमन्तरेणैव तद्विरुद्धार्वाचीनफलहेतुव्याकृताव्याकृतलक्षणप्रकृतितत्त्वोपासनविधानस्य प्रसङ्गलेशाभावात् ॥ १२ ॥ किञ्च - अस्मिन् प्रकरणे सम्भूत्यसम्भूत्युपासनयोर्व्यस्तयोः प्रत्येकमनुष्ठितयोरनिष्टफलाभिधानपूर्वकं समुच्चयेन तयोर्द्वयोरनुष्ठानावश्यकतां प्रदर्श्य तथानुष्ठाने मृत्युतरणपूर्वकामृतप्राप्तिलक्षणं फलं सिद्ध्यतीत्यभिधीयत इत्यवगम्यते ॥ १३ ॥ इदञ्च शङ्करकृतव्याख्याने सङ्गतं न भवति - यतस्तेन असम्भूत्युपासनस्याव्याकृतप्रकृतितत्त्वोपासनरूपस्य प्रकृतिलयात्मकममृतशब्दितं फलमिति सम्भूत्युपासनस्य व्याकृतप्रकृतितत्त्वोपासनरूपस्य कार्यब्रह्मोपासनपर्यवसन्नस्याणिमाद्यैश्वर्यं फलमिति तदुभयमप्यमुमुक्षुसंसारिकाङ्क्षितफलविशेषरूपमेवेति चाभिधीयते ॥ १४ ॥ एवं सति हि प्रत्येकं क्रियमाणयोरेतयोरुपासनयोस्तत्तत्संसार्यधिकारिकाङ्क्षितफलविशेषसिद्धिरेव भवतीति तयोः प्रत्येकं कृतयोरनिष्टफलावाप्त्यभिधानम्-'अन्धं तमः प्रविशन्ति' इत्यादिना कृतं नोपपद्यते ॥ १५ ॥ एवं समुच्चयेन तयोरुभयोरुपासनयोरनुष्ठानविधानमपि न सङ्गच्छते-अणिमाद्यैश्वर्यप्राप्तिप्रकृतिलयलक्षणयोः फलयोः परस्परविरुद्धत्वेन युगपत्साधनासम्भवात्, प्रत्युत प्रत्येकमेवानुष्ठिताभ्यां ताभ्यामुपासनाभ्यां क्रमेणैव तयोः फलयोस्साधनसम्भवेन तयोरुपासनयोः प्रत्येकानुष्ठानेऽनिष्टफलावाप्त्यभिधानेन निन्दनपूर्वकं समुच्चयेन युगपदनुष्ठानविधानस्योपपत्तिलेशानुपलम्भाच्च ॥ १६ ॥ न च समुच्चयेनानुष्ठितयोस्तयोरुपासनयोरन्यदेव किञ्चिदविरुद्धं फलमुच्यत इति तेनाभिधीयते, येन प्रत्येकानुष्ठाननिन्दापूर्वकं समुच्चयेन द्वयोरुपासनयोर्विधानं कथञ्चिदुपपद्येत ॥१७॥ उच्यते च प्रत्युत तेन-'मृत्युं तीर्त्वा'इत्यस्य अणिमाद्यैश्वर्यप्राप्तिलक्षणफलपर्यवसन्नानैश्वर्याधर्मकामादिलक्षणमृत्युतरणपरत्वम्-'अमृतमश्नुते' इत्यस्य प्रकृतिलयलक्षणफलपरत्वञ्च व्याकुर्वता समुच्चयेनानुष्ठितयोरपि तयोरुपासनयोः प्रत्येकानुष्ठिततत्साध्यफलद्वयप्राप्तिप्रतिपादनपरत्वमेवास्याश्श्रुतेः ॥ १८ ॥ तच्चासम्बद्धं-परस्परविरुद्धयोर्द्वयोः फलयोर्युगपत्प्राप्त्यसम्भवात्, क्रमेणैव तत्प्राप्तेर्विवक्षितत्वे च तयोरुपासनयोः प्रत्येकानुष्ठानदूषणपूर्वकं समुच्चयेन युगपदनुष्ठानविधानानुपपत्तेश्च ॥ १९ ॥ एवम्मुमुक्षुविषयपरविद्याप्रकरणेऽस्मिन् - 'मृत्युं तीर्त्वा' इत्यनेन प्रतिपन्नस्य मृत्युतरणस्य संसारतरणरूपताम्, 'अमृतमश्नुते' इत्यनेन प्रतिपन्नाया अमृतप्राप्तेर्ब्रह्मप्राप्तिरूपताञ्च स्वरसतः प्रतीयमानां विहाय मध्ये सङ्गतिलेशविधुरबुभुक्षूपासनप्रसङ्गं स्वैरं परिकल्प्य तदानुगुण्येन मृत्युतरणामृतप्राप्त्योस्सांसारिकफलविशेषरूपाणिमाद्यैश्वर्यप्रकृतिलयरूपतावर्णनञ्चासमञ्जसमेव ॥ २० ॥ तत्रापि प्रकृतिलयस्यामृतशब्दार्थतावर्णनं सुतरामसमञ्जसम्, मरणाभावपरामृतशब्देन तद्बोधनासम्भवात्, उपासनविशेषेण प्रकृतिलीनानामपि विनैवोपासनविशेषं कालवशान्महाप्रलये प्रकृतिनिर्लीनवदेव पुनःपुनस्सृष्टिषु यावत्प्रकृतिसम्बन्धं जननमरणाद्यवस्थाया दुर्वारत्वात् ॥ २१ ॥ एवं—'सम्भूतिं च विनाशञ्च' इत्यत्र - अस-

श्री॥म्भूतेस्सम्भूतिनिवृत्तिरूपायास्सम्भूतिविनाशरूपतासम्भवेन विनाशशब्दप्रतिपाद्यतासम्भवस्य प्रागुपपादितत्वेन विनाशशब्दप्रतिपाद्यतायामित्थं स्वरसतस्सम्भवन्त्यां प्राकरणिकनिर्देशस्वभावतोऽपि स्वरसतः प्राप्तायां तदसम्भवम्मत्वा विनाशशब्दस्य विनाशधर्मिपरत्वेन सम्भूतिपरतायाः सम्भूतिशब्दस्य च्छान्दसाकारलोपकल्पनेनासम्भूतिपरतायाश्च प्रकरणस्वरसविरुद्धाया वर्णनमप्यव्युत्पन्नकृत्यमेव ॥ २२ ॥ तस्मात्सर्वथैवासम्बद्धमलत्यशाङ्करव्याख्यानम् ॥ २३ ॥

एतेन—अत्र मन्त्रत्रये सम्भूतिशब्दः-'एतमितः प्रेत्याभिसम्भवितास्मि' धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसम्भवामि' इत्यादिष्विव ब्रह्मप्राप्तिपरः ; असम्भूतिशब्दस्तत्स्थाने तत्समानार्थपरतया प्रयुक्तो विनाशशब्दश्च ब्रह्मप्राप्तिप्रत्यासन्नतत्प्रतिबन्धकविनाशपरः । यद्वा 'विनाशेन मृत्युं तीर्त्वा' इति पूर्वोक्तसरूपशब्दे विरूपार्थपरिहाराय विनाशशब्देन तत्समानस्थानप्रयुक्तेनासम्भूतिशब्देन च मानदम्भादीनां हिंसास्तेयादीनां बहिर्मुखेन्द्रियवृत्तीनाञ्च समाधिविरोधिपापहेतूनां विनाशो विवक्षितः, सम्भूतिशब्देन ब्रह्मसमाधिनिष्पत्तिर्विवक्षितेत्यभिप्रायेण वेदान्ताचार्यैस्तदनुयायिभिरन्यैश्च कैश्चित्कृतमपि व्याख्यानमयुक्तमेवेति सिद्धम्, यथोक्तरीत्या सम्भूत्यसम्भूतिशब्दयोर्विग्रहपरिग्रहतन्निवृत्तिस्वारसिकयोस्तत्परतयैव निर्वाहे ब्रह्मप्राप्तितत्प्रतिबन्धकविनाशपरतायास्समाधिनिष्पत्तितत्प्रतिबन्धकविनाशपरतायाश्च महता क्लेशेन बलात्कल्पनस्यानावश्यकत्वात् ॥ २४ ॥ 'अभिसम्भवितास्मि' 'अभिसम्भवामि' इत्यादिष्वभ्युपसर्गयोगबलात्सकर्मकेण धातुनाऽभिसम्भूतेः प्राप्तिरूपायास्स्वरसतो लाभसम्भवेऽपि तद्विधुरेण कर्मवाचिपदसमभिव्याहारविधुरेण च स्वरसतोऽकर्मकेण धातुना प्रतिपद्यमानायास्सम्भूतेः प्राप्तिरूपता हि न स्वरसतस्सुवचा ॥ २५ ॥ समाधिनिष्पत्तिरूपता तु सुतरामेव न सुवचा ॥ २६ ॥ एवं सम्भूतिशब्दस्य ब्रह्मप्राप्तिपरतायास्समाधिनिष्पत्तिपरताया वा कथञ्चित्क्लिष्टकल्पनया वर्णनेऽप्यसम्भूतिशब्दस्य सम्भूत्यभावपरताया एव सम्भवदुक्तिकतया सम्भूतिप्रतिबन्धकविनाशपरता हि सुतरामेव दुर्वचा॥२७॥ एवमसम्भूत्युपासनस्य सभूत्युपासनस्य च तत्तत्प्राप्त्युद्देश्यकानुसन्धानरूपस्य प्रत्येकं करणे-'अन्धं तमः प्रविशन्ति' इत्यादिमन्त्रे महानर्थप्रतिपादनं चासम्बद्धम् ॥ २८॥ न च भवदीयव्याख्यानेऽपि-सम्भूतिशब्दस्याप्राकृतविग्रहपरिग्रहपरताया असम्भूतिशब्दस्य प्राकृतविग्रहपरिग्रहाभावपरतायाश्च स्वीकारे शब्दास्वारसिकतापत्तिर्दुर्वारा, सम्भूतिशब्दप्रतिपन्नार्थसामान्याभावस्यैवासम्भूतिशब्देन स्वरसतो बोधसम्भवेन प्राकृतविग्रहपरिग्रहाभावलक्षणविशेषाभावबोधासम्भवात् ; एवं सम्भूत्यसम्भूत्युपासनयोर्दिव्यविग्रहपरिग्रहप्राकृतविग्रहपरिग्रहाभावफलोद्देश्यकोपासनरूपयोः प्रत्येकानुष्ठाने महानर्थवर्णनानुपपत्तिश्च भवतोऽपि तदवस्थैवेति वाच्यम्; सम्भूत्यसम्भूतिशब्दयोर्विग्रहपरिग्रहतदभावपरतायास्स्वारसिकत्वेनात्र समुच्चये परस्पराविरोधाय सम्भूतिशब्दस्यैकविधविग्रहपरिग्रहपरताम्, असंभूतिशब्दस्यैकविधविग्रहपरिग्रहाभावपरताञ्च स्वीकृत्यास्य मन्त्रस्य समुच्चयेनोभयोपासनपरत्वस्वीकारे स्वारस्यभङ्गाभावात्, 'अजायमानो बहुधा विजायते'-इत्यादिषु समुच्चयेन प्रतियोगितदभावोभयप्रतिपादनपरप्रकरणेषु सर्वत्राविरोधाय सामान्यशब्दस्य विशेषपरताया एव स्वीकारदर्शनात्, अत्र सम्भूत्यसम्भूत्युपासनयोस्सामान्यतो विग्रहपरिग्रहतदभावोद्देश्यकयोर्व्यस्तयोः प्रत्येकमनुष्ठान एव महानर्थप्रतिपादनस्य 'अन्धं तमः प्रविशन्ति' इत्यादिमन्त्रविवक्षितत्वेनानुपपत्तिलेशाभावाच्च ॥ २९ ॥ सामान्यतो विग्रहपरिग्रहस्य केवलस्य प्राप्यतयाऽनुसन्धानेऽपि पुनस्संसारप्राप्त्यादिलक्षणमहानर्थः प्राप्नोति, सामान्यतो विग्रहपरिग्रहाभावस्य केवलस्य प्राप्यतयानुसन्धानेऽपि पश्चाद्यावदात्मभाविमहानर्थरूपकैवल्यपुरुषार्थ एव प्राप्नोति ; अतः कर्माधीनप्राकृतशरीरलक्षणैकविधविग्रहपरिग्रहाभावस्य कर्मानधीनाप्राकृतशरीरलक्षणैकविधशरीरपरिग्रहस्य च प्राप्यतयाऽ-

हिरण्मयेन पात्रेण सत्यस्यापिहितम्मुखम् ।
तत्त्वं पूषन्नपावृणु सत्यधर्माय दृष्टये ॥ १५

वे॥अथैवं फलपर्यन्तसाङ्गब्रह्मनिष्ठस्यानुसन्धेया मन्त्रा उपदिश्यन्ते । तेषु च पूषादिशब्दास्सर्ववाच्यं परमात्मानमनुसन्दधतां तत्तद्देवताप्रणाड्या साक्षाद्वा तत्पर्यन्ताः । अत्र हि यमसूर्यादिशब्दानामेकविषयत्वं स्वरसावगतं तथा सत्येवोपपद्यते । तत्र प्रथमेन मन्त्रेण पूषशब्दविवक्षितं भगवन्तं प्रति प्रस्तुता समाधिप्रतिबन्धनिवृत्तिं प्रार्थयते—**हिरण्मयेन दृष्टये** इति। सत्यशब्दोऽत्र जीव-

---

कू॥एवमाचार्यस्साङ्गभक्तियोगमुपदिश्य अथ तन्निष्ठस्यानुसन्धेयं मन्त्रद्वयमुपदिशति । तत्र प्रथमेन मन्त्रेण पूषशब्दविवक्षितं भगवन्तं प्रति प्रस्तुता समाधिप्रतिबन्धकनिवृत्तिं प्रार्थयते—**हिरण्मयेनेति** ।

---

श्री॥नुसन्धाने कर्माधीनप्रकृतिसम्बन्धलक्षणमृत्युतरणं दिव्यविग्रहपरिग्रहसापेक्षभगवत्प्राप्तिलक्षणपरमपुरुषार्थश्चेत्युभयं सिद्ध्यतीत्येव वेदपुरुषोपदेशस्येहाभिमतत्वान्नात्र कश्चिद्विरोधः ॥ ३० ॥ यद्वा - अत्र सम्भूतिशब्दस्य सामान्यतो विग्रहपरिग्रहमात्रपरत्वेऽपि न विरोधः, असम्भूतिशब्दस्य स्वप्रयोज्यकर्मफलभोगाश्रयत्वसम्बन्धेन विग्रहपरिग्रहसामान्याभावपरत्वसम्भवेन कर्माधीनविग्रहपरिग्रहमात्राभावतदनधीनविग्रहपरिग्रहयोरेव सम्भूत्यसम्भूत्युपासनयोस्समुच्चितयोः फलतया पर्यवसानसम्भवात् , व्यस्तयोस्तयोस्संसारकैवल्ययोरेव पर्यवसानसम्भवाच्च ॥ ३१ ॥

एवं शङ्करमतानुयायिना महीधरेण 'अन्धं तमः प्रविशन्ति येऽसंभूतिमुपासते' इत्यादिमन्त्रत्रयस्य शङ्करव्याख्याने किञ्चिदतृप्तिं भजमानेन कृतम् 'असम्भूतिम्' इत्यादेर्बौद्धादिमतनिन्दापरं व्याख्यानं तु सुतरामेवासम्बद्धम् - अस्य प्रकरणस्य प्रत्येकं कृतयोस्सम्भूत्यसम्भूत्युपासनयोर्व्यस्तयोरनर्थहेतुतायास्सहकृतयोस्समस्तयोस्तयोरभ्युदयहेतुतायाश्च प्रतिपादने तात्पर्यस्य प्रस्फुटत्वेन 'अन्धं तमः प्रविशन्ति येऽसम्भूतिमुपासते' इत्यादिमन्त्रे असम्भूत्युपासनस्य 'मृतस्य पुनस्सम्भव एव नास्ति, अतश्शरीरान्त एवास्माकम्मुक्तिः' इत्येवंभूतबौद्धोपासनरूपतायाः-सम्भूत्युपासनरूपतायाः सम्भूत्युपासनस्य-कर्मानुष्ठानलेशविधुरकेवलात्मोपासनरूपतायाः—'सम्भूतिञ्च विनाशञ्च' इत्यादिमन्त्रे-सम्भूतिशब्दस्य - असम्भूतिशब्दस्थाने तत्पर्यायत्वाभिप्रायेण प्रयुक्तस्य विनाशशब्दस्य च क्रमेण परब्रह्मशरीरपरतायाश्च वर्णनस्य प्रकरणस्वभावानभिज्ञाव्युत्पन्नकृत्यमात्ररूपताया आपण्डितपामरमतिस्फुटत्वात् ॥ ३२ ॥ तथा च शङ्करकृतं तदनुयायिकृतञ्च व्याख्यानं—वेदान्ताचार्यकृतं तदनुयायिकृतञ्च व्याख्यानं यथोक्तानुपपत्तिभ्यश्श्रुत्यक्षरस्वारस्याननुगुणत्वाच्चानुपादेयमेवेति सिद्धम् ॥ ३३ ॥ इति चतुर्दशमन्त्रव्याख्यानम् ॥ १४ ॥

अयं मन्त्रः काण्वैः पञ्चदशमन्त्रतया पठ्यते ॥ १ ॥ माध्यन्दिनैस्सप्तदशमन्त्रतया । तत्राप्युत्तरार्धम्—'योऽसावादित्ये पुरुषस्सोऽसावहम् ॥ ओं खं ब्रह्म' इत्येवं रूपं च पठ्यते ॥ २ ॥ इतः पूर्वमुपासनस्य स्वरूपं साङ्गं प्रतिपाद्य तत्करणमन्त्रा इत आरभ्याभिधीयन्ते ॥ ३ ॥ पूर्वमन्त्रतः-'उपासते' इति वा, 'वेद' इति वा पदमनुवर्त्य, इति शब्दं कर्तृवाचकब्रह्मोपासकपरशब्दञ्च प्रपूर्य 'इत्युपासते' इति वा, 'इति वेद' इतिवाऽमीषां मन्त्राणामन्वयो बोध्यः, एतेषां मन्त्राणां प्राक्प्रवृत्तोपदेष्टृपदेशरूपत्वाभावेन प्रकारान्तरेणान्वयासम्भवात् ॥ ४ ॥ एते हि मन्त्रा उपास्यपरमपुरुषोद्देश्यकोपासककर्तृकप्रार्थनापराः ॥ ५ ॥ पञ्चदशमन्त्रस्यास्य पदविवरणं—**हिरण्मयेन पात्रेण**-हिरण्यविकारभूततिरोधायकपात्रेण, तद्वत्स्पृहणीयतया स्वप्राप्तीच्छारूपरागान्धताहेतुत्वलक्षणसादृश्येन हेतुना प्रकृ-

वे॥परः। 'सत्यं चानृतञ्च सत्यमभवत्' 'अथ नामधेयं सत्यस्य सत्यं प्राणा वै सत्यं तेषामेष सत्यम्' इत्यादिषु जीवेऽपि तत्प्रयोगात्। तस्य **मुखम्**-अनेकेन्द्रियावष्टम्भतया मुखवदवस्थितं मनः, **हिरण्मयेन पात्रेण अपिहितं**-रागात्मकतया हिरण्मयसदृशेन रजोमयेन पात्रेण परमात्मविषयवृत्तिप्रतिरोधकेन च्छादितम्। हृदि निहिते परमात्मविषये निरुद्धवृत्तिकमित्यर्थः। रजःकथनं तमसोऽप्युपलक्षणम्। हिरण्मयशब्देन कर्माधीनभोग्यवर्गप्रदर्शनम्। **तत्**-जीवस्य मुखस्थानीयं मनः, **पूषन्**-आश्रितपोषणस्वभाव, **अपावृणु**-निरस्तपिधानं कुरु। कस्य हेतोः? **सत्यधर्माय**

---

कू॥हे **पूषन्** - आदित्यान्तर्यामिन्, 'य आदित्ये तिष्ठन्' इत्यारभ्य 'य आदित्यमन्तरो यमयति' इति श्रुतेः 'शास्त्रदृष्ट्या तूपदेशो वामदेववत्' इति न्यायाच्च। यद्वा—**पूषन्**-आश्रितपोषणस्वभावेत्यर्थः। 'साक्षादप्यविरोधं जैमिनिः' इति सूत्रितत्वात्। **सत्यस्य**-सत्यशब्देनात्र प्रकृत्यादिवत् स्वरूपविकाररहितो जीवात्मोच्यते। 'सत्यञ्चानृतञ्च सत्यमभवत्' इत्यादिषु जीवेऽपि सत्यशब्दप्रयोगात्। तस्य **मुखं** - मुखवत् अनेकेन्द्रियावष्टम्भतया मुखसदृशं मन इत्यर्थः। **हिरण्मयेन**-हिरण्मयसदृशेन, कर्माधीनभोग्यवर्गेणेति यावत्। **पात्रेण**-परमात्मविषयकवृत्तिप्रतिरोधकेन, **अपिहितं**-छादितं, हृदि निहिते परमात्मविषये निरुद्धवृत्तिकं जातमित्यर्थः। **तत्**-जीवस्य मुखस्थानीयं मनः, **त्वं**-हृषीकाणामीशस्त्वम्,

---

श्री॥ त्याज्यपरपर्यायमायामयभोग्यभोगोपकरणभोगस्थानात्मकाचित्तत्त्वतद्वियुक्तविशुद्धज्ञानानन्दलक्षणचित्तत्त्वात्मकवस्तुजातस्य पुरःप्रस्फुटस्फूर्तिकस्य चिदचिच्छरीरकपरमात्मानं प्रति बाह्यावरणदलभूतस्य हिरण्मयपात्रत्वेन निगीर्याध्यवसानमर्यादयाऽयं निर्देशः; यथा-'पश्य नीलोत्पलद्वन्द्वान्निस्सरन्ति शिताश्शराः' इत्यादिषु सादृश्यनिमित्तेन नीलोत्पलत्वशरत्वादिना नेत्रदृष्ट्यादिनिर्देशः। **सत्यस्य**-परस्य ब्रह्मणस्तव, **मुखं** - प्राप्तिद्वारं, भगवत्प्राप्तिहेतुज्ञानमार्गलक्षणं सद्दर्शनमिति यावत्। **अपिहितम्**-आच्छादितम्। 'एष तु वा अतिवदति यस्सत्येनाति वदति' ॥ छां ॥ ७ ॥ १६ ॥ १॥ 'तस्य ह वा एतस्य ब्रह्मणो नाम सत्यमिति'॥ छां ॥ ८ ॥ ३ ॥ ४ ॥ 'तस्योपनिषत् सत्यस्य सत्यमिति प्राणा वै सत्यं तेषामेष सत्यम्' ॥ बृ ॥ ४ ॥ १ ॥ २० ॥ 'अथ नामधेयँ सत्यस्य सत्यमिति प्राणा वै सत्यं तेषामेष सत्यम्'॥ बृ ॥४॥ ३ ॥ ६॥ इत्यादिश्रुतिभिस्सत्यशब्दस्य परब्रह्मनामत्वावगमात्, जीवात्मन्यपि प्रयोगसत्त्वेऽपि ततोऽपि परब्रह्मण्येव मुख्यत्वावगमात्, औचित्यात्, मुख्यातिक्रमस्यान्याय्यत्वाच्चात्रत्यसत्यशब्दः परमात्मपर एव। बाह्यदलभूताचित्तत्त्वचित्तत्त्वनिबन्धनैश्वर्यकैवल्यलक्षणनानाविधार्वाचीनपुरुषार्थरागाकृष्यमाणचित्तानां लोकानां तादृशार्वाचीनपुरुषार्थहेतुत्वसत्यधर्मभूतज्ञानमार्गलक्षणासद्दर्शनरागेण सर्वान्तरात्मतत्त्वभूतभगवत्प्राप्तिलक्षणपरमपुरुषार्थहेतुसत्यधर्मभूतज्ञानमार्गलक्षणसद्दर्शनप्रवेशप्रसङ्ग एव प्रतिरुद्धावकाशो वर्तत इति भावः। प्रसिद्धानि हि भगवत्प्राप्तिहेतुसद्दर्शनप्रतिरोधीनि बाह्यदर्शनानि बहूनि। भगवत्कटाक्षमन्तरेण बाह्यदर्शनरागनिवृत्तिपूर्वकसद्दर्शनप्रवृत्तेरसम्भावितत्वेन तदर्थं स एव प्रार्थ्यते। हे **पूषन्** - आदित्यशरीरकतन्मण्डलान्तर्वर्तिभगवन्। अस्या विद्याया अन्तरादित्यविद्याविशेषरूपतया तन्मण्डलान्तर्वर्तिभगवतस्सम्बोधनमिदम्, उत्तरमन्त्रे 'व्यूह रश्मीन् समूह तेजः' इत्यादिभिरन्तरादित्यविद्यालिङ्गावगमात्; माध्यंदिनपाठेऽस्मिन्नेव मन्त्रे

---

१. तै. आन. ६-३ ॥
२. बृ. ४-३.६ ॥
३. बृ. ५-७-३ ॥
४. ब्र सू १-१-३१ ॥
५. ब्र. सू. १-२-२९ ॥

**पूषन्नेकर्षे यम सूर्य प्राजापत्य व्यूह रश्मीन् समूह तेजः ।**
**यत्ते रूपं कल्याणतमं तत्ते पश्यामि योऽसावसौ पुरुषस्सोऽहमस्मि ॥ १६**

वे॥**दृष्टये**-सत्यस्य जीवस्य धर्मभूताय पूर्वोक्तब्रह्मानुभवदर्शनायेत्यर्थः ॥ १५ ॥

पुनरपि तया दृष्टया द्रष्टव्य विशिंषन् दृष्टया गुणमभ्यर्थयते—**पूषन्नेकर्षे पश्यामि** इति । **एकर्षे**—अद्वितीयातीन्द्रियद्रष्टः, **यम**-सर्वान्तर्यामिन्,**सूर्य**-स्वभक्तबुद्धीनां सुष्ठु प्रेरक, **प्राजापत्य**-प्रजापतिप्रसूतस्य सर्वस्यान्तर्यामिन्, अविवक्षितप्रत्ययार्थो वा प्राजापत्यशब्दः, प्रजानां पते इत्यर्थः ।

---

कू॥**अपावृणु** निरस्ततिरोधानं कुर्वित्यर्थः।तत्कस्य हेतोः?तत्राह—**सत्यधर्माय**-सत्यस्य जीवस्य धर्मभूतायै दृष्टये । दृष्टिः-दर्शनं, त्वद्दर्शनायेति भावः ॥ १५ ॥

पुनरपि तया दृष्टया द्रष्टव्य विशिंषन् दर्शनं तत्साधनं चाभ्यर्थयते—**पूषन्निति। पूषन्**-आश्रितपोषक । एकश्चासावृषिश्च **एकर्षिः**-अद्वितीयोऽतीन्द्रियार्थद्रष्टा । 'नान्योऽतोऽस्ति द्रष्टा' इति श्रुतेः । **यम**-यमयति सर्वानिति यमः, सर्वान्तर्यामिन् । 'यः पृथिवीमन्तरो यमयति...य आत्मानम-

---

श्री॥'योऽसावादित्ये पुरुषः' इति स्पष्टमेव श्रवणाच्च । 'शास्त्रदृष्टया तूपदेशो वामदेववत्' ॥ १ ॥ १ ॥ ३१ ॥ इति सूत्रोक्तन्यायेन शरीरवाचकानां शरीरिण्यपि शक्तिसद्भावात्सूर्यवाचकपूषशब्दस्येह तच्छरीरकपरमात्मपरत्वमित्यवधेयम् । **त्वं सत्यधर्माय दृष्टये**-त्वत्प्राप्तिलक्षणपरमपुरुषार्थहेतुभगवद्धर्मरूपसद्दर्शनाय, अस्माकं समीचीनदर्शनप्रवृत्तिसिद्धय इति यावत् । **तत्**—यथोक्तसद्दर्शनलक्षणं भवत्प्राप्तिद्वारम्, **अपावृणु** - अपगततिरोधानं कुरु, असद्दर्शनप्रवृत्तिहेतुरागलक्षणं सद्दर्शनावरणं दूरीकुर्विति यावदिति बोध्यम् ॥ ६ ॥ भगवत्प्राप्तिविरोधिबाह्यविषयनिवृत्तिर्भगवत्प्राप्तिज्ञानमार्गप्रवृत्तिश्चेत्युभयमपि भगवदेकायत्तमित्यत एव तदर्थं भगवानेवात्र प्रार्थ्यते ॥ ७ ॥ तदुक्तं भगवतैव— 'दैवी ह्येषा गुणमयी मम माया दुरत्यया । मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते' ॥ गी ॥ ७ ॥ १४ ॥ इति-'तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् । ददामि बुद्धियोगं तं येन मामुपयान्ति ते' ॥ गी ॥ १० ॥ १० ॥ इति च ॥ ८ ॥ अन्येषां दर्शनानामल्पास्थिरप्रयोजनान्तरेष्वेव परमप्रयोजनत्वबुद्धिरूपत्वाद्वस्तुतस्तत्र परमप्रयोजनत्वाभावाच्चासत्यधर्मरूपता; भगवत्प्राप्तेरेव वस्तुतः परमपुरुषार्थरूपतया तत्र तथात्वबुद्धिरूपस्य भागवतदर्शनस्यैव सत्यधर्मरूपता ; यद्वा दर्शनान्तराणा प्रयोजनान्तरपर्यवसायिनां भगवत्प्राप्त्यपर्यवसायित्वाच्चसत्यधर्मता; भागवतदर्शनस्यैव-'सत्यस्य धर्मः'इति व्युत्पत्त्या सत्यशब्दवाच्यभगवत्सम्बन्धितत्प्राप्तिरूपश्रेयस्साधनवाचिसत्यधर्मशब्दवाच्यता चेत्यवधेयम् ॥ ९ ॥ माध्यन्दिनपाठसिद्धैतन्मन्त्रोत्तरार्धविवरणमुत्तरमन्त्रविवरणदशायां करिष्यते ॥ १० ॥ इति पञ्चदशमन्त्रव्याख्यानम् ॥ १५ ॥

'पूषन्' इत्यादिरयम्मन्त्रो माध्यन्दिनपाठे नास्ति॥१॥ काण्वैस्तु षोडशमन्त्रतया पठ्यते ॥ २ ॥ परं त्वेतन्मन्त्रोत्तरार्धांश एव किञ्चिदन्यथारूपः —'हिरण्मयेन'इत्यादिपूर्वमन्त्रोत्तरभागतया माध्यन्दिनैः पठ्यते ॥ ३ ॥ अयम्मन्त्र उपास्यपरमपुरुषोद्देश्यकतदीयाप्राकृतदिव्यमङ्गलविग्रहप्रदर्शनप्रार्थनापरः ॥ ४ ॥ अस्य मन्त्रस्य प्रतिपदविवरणं—**प्राजापत्य**-प्रजापतेः कश्यपाददित्यां सम्भूतापत्यरूप, **सूर्य**-

---

१. बृ. ५-७-२३ ॥ | २. शतपथ. १४-५-७, ३० ॥

वे॥व्यूह रश्मीन् समूह तेजः-स्वस्वरूपप्रकाशनौपयिकान् स्वोग्ररश्मीन् व्यपोह,प्रभात्मकं च तेजस्स-मूहीकुरु। यत्-'आदित्यवर्णम्' इत्यादिप्रसिद्ध सर्वेभ्यः कल्याणेभ्योऽतिशयितकल्याणं शुभाश्रयभूतं ते दिव्यं रूपं तत्पश्यामि। अत्र वर्तमानव्यपदेशः उत्तरवाक्यवत्तात्कालिकानुसन्धानानुवादः। प्रार्थनाप्रकरणानुरोधे तु व्यत्ययेन पश्येयमिति लिङर्थोऽत्र ग्राह्य इत्यपुनरुक्तिः। तदा साधारण्यज्ञापनार्थं सदा पश्यामीति वा निरुपाधिकशेषत्वानुगुणोक्तिः। अथान्तरात्मनोऽहंग्रहणेनानुसन्धानमाह—

कू॥न्तरो यमयति' इत्यादिश्रुतेः सूर्य-स्वभक्तबुद्धीना सुष्ठु प्रेरक। प्राजापत्य प्रजापतिः चतुर्मुखः,तस्य सुताः प्राजापत्याः, तेषामन्तर्यामिन्; यद्वा-प्रजापतिरेव प्राजापत्यः, वैश्वानर इति वत्, विश्वानर एव हि वैश्वानरः; तथा च प्रजानां पतिरिति व्युत्पत्त्या प्रजापतिर्विष्णुः '[३]प्रजापतिश्चरति गर्भे अन्तः' इति श्रुतेः। व्यूह रश्मीन्-भवदीयदिव्यरूपदर्शनानुपयुक्तान् स्वोग्ररश्मीन्, व्यूह-व्यपोह-विगमयेत्यर्थः। यत्तु दर्शनौपयिकं प्रभात्मकं सौम्य तेजः-तत् समूह समूहीकुरु। तत्किमर्थमित्याशङ्क्य अर्जुनादिवद्दृष्टुमिच्छामि ते रूपमित्याह—यदिति। 'आदित्यवर्णं तमसः परस्तात्' इत्यादिषु प्रसिद्धमित्यर्थः। ते-'[४]आनन्दो ब्रह्म' इति निरतिशयभोग्यस्य तव अतिकल्याणतम सौन्दर्यादिगुणातिशयेन प्रियतमं सर्वेभ्यः कल्याणगुणेभ्योऽतिशयितं कल्याणञ्च शुभाश्रयभूतमित्यर्थः। ते-यद्दिव्यं रूपं तत् पश्यामि - पश्येयमिति लिङर्थो ग्राह्यः। लकारव्यत्ययश्छान्दसः। द्रष्टुमिच्छामीति भावः। '[५]अकायमव्रणम्' '[६]अशरीरं शरीरेषु' '[७]अपाणिपादो जवनो ग्रहीता' इत्यादिसामान्यवचनानि,'[८]अजायमानः' '[९]अजोऽपि सन्नव्ययात्मा' '[१०]न चास्य प्राकृता मूर्तिः' इत्यादिविशेषवचनसिद्धहेयशरीरप्रतिषेधपराणि। ननु 'यत्ते रूपं कल्याणतम' '[११]य एषोऽन्तरादित्ये हिरण्मयः पुरुषः' '[१२]ईशावास्यमिदं सर्वं' '[१३]पतिं विश्वस्यात्मेश्वरं' '[१३]सर्वकर्मा सर्वगन्धः' '[१४]स्वाभाविकी ज्ञानबलक्रिया च' '[१५]तस्य ह वा एतस्य ब्रह्मणो नाम स-

श्री॥सुष्ठु ईरयति प्रेरयतीति सूर्यः,लोकबुद्धिप्रेरकः,तस्य सम्बोधनं,पूषन्-लोकपोषकरव्याख्यदेवताविशेषशरीरक, एकर्षे - अद्वितीयातीन्द्रियसर्वार्थयथावस्थितसाक्षात्कारकारिन्, 'यस्सर्वज्ञस्सर्ववित्' इत्युक्तगुणविशिष्टेति यावत्। हे यम - सर्वनियन्तृभूतपरमात्मन्। अत्र प्राजापत्यसूर्यपूषशब्दैर्यमशब्दार्थसर्वनियन्तृभूतपरमात्मनो विशेषणमस्या विद्याया आदित्यमण्डलान्तर्वर्तिपरमपुरुषविषयत्वेनान्तरादित्यविद्यारूपत्वज्ञापनार्थं, सूर्यविशेषणयोर्लोकप्रेरकत्वपोषकत्वयोर्धर्मयोस्तद्विद्यायामुपास्यतदन्तरात्मभूतपरमात्मगुणतयाऽनुसन्धानसिद्ध्यर्थञ्च,शरीरवाचकाना शब्दाना शरीरिणि अपर्यवसानवृत्तिमूलेनात्यसामानाधिकरण्यनिर्देशेन सूर्याख्यदेवताविशेषस्य परमात्मशरीरताया बोध्यमानत्वात्, परमात्मनाऽन्तः प्रविश्य नियम्यमानस्यैव परमात्मशरीरत्वेन शरीरगतक्रियामुख्यकारणत्वस्यात्मगुणत्ववत्परमात्मना सर्वात्मना नियम्यमानतच्छरीरभूतदेवताविशेषगतलोकप्रेरणपोषणमुख्यकारणत्वस्यापि 'य

१. श्वे. ३-८ ॥
२. तै. अम्भस्यनु. १-१ ॥
३. पु. सू. ॥
४. तै. भृ. २-१ ॥
५.
६. कठ. १-२-२२ ॥
७. श्वे. ३-१९ ॥
८. तै. आरण्य. ब्रह्ममे. पु. सू. ॥
९. गीता. ४-६ ॥
१०. वराहपु. ७५-४२ ॥
११. छा. १-६-६ ॥
१२. तै. ना. ११-३ ॥
१३. छा. ३-१४-४ ॥
१४. श्वे. ६-८ ॥
१५. छा. ८-३-४ ॥

वे॥**योऽसावसौ पुरुषस्सोऽहमस्मि** इति। वीप्सा अत्यादरव्यञ्जनार्था। यद्वा 'योऽसावतीन्द्रियग्राह्यस्सूक्ष्मोऽव्यक्तस्सनातनः। सर्वभूतमयोऽचिन्त्यस्स एष स्वयमुद्बभौ' इत्यादिवाक्यच्छायया यत्तच्छब्दाभ्यामदश्शब्दौ विभज्यान्वेतव्यौ; सर्वातीन्द्रियप्रमाणसिद्धत्वद्योतनार्थौ वा। **पुरुषः**-पूर्णत्वपूर्वसत्त्वादिगुणकः आदित्यवर्णविग्रहविशिष्टः सर्ववेदपठितानन्यपरपुरुषसूक्तादिप्रसिद्धो महापुरुषः। **सोऽहमस्मि**—अहशब्दोऽत्र जीवद्वारा तदन्तरात्मपर्यन्तः। अत एवासीत्यपि प्रत्यग्रूपस्वविशिष्टे परमात्मनि विश्राम्यति। 'असम्युत्तमः' इत्येतावदेव ह्यनुशिष्टम्। न पुनरस्मच्छब्दस्य प्रत्यगात्मद्वारा पर-

क्त॥त्यमिति''तस्योदिति नाम'इत्यादिभिश्शास्त्रैर्गुणविग्रहादयो ब्रह्मणोऽपि विधीयन्ते; 'निर्गुण''निरञ्जनम्' 'अविकाराय' 'आकायमव्रणं''नेह नानास्ति किञ्चन' 'निष्कलं निष्क्रियम्' 'अगोत्रमवर्णम्' अगोत्रमिति-अनामकमित्यर्थः। एवमादिभिश्शास्त्रैः गुणादयः प्रतिषिध्यन्ते। तथा च विधिप्रतिषेधयोर्विरोधादन्यतरबाधोऽवश्यंभावी, तत्र निषेधस्य प्रसक्तिपूर्वकतया पश्चात्प्रवृत्तं प्रतिषेधशास्त्रमपच्छेदाधिकरणन्यायेन प्रबलम्। अतः प्रतिषेधबलेन गुणादिविषयस्सर्वे बाधिताः। ततश्च अविद्याख्यदोषपरिकल्पिता गुणविग्रहादयो मिथ्याभूता इति, तदिदमनादरणीय, पशुच्छागनयेन उत्सर्गापवादनयेन च विधिनिषेधयोर्भिन्नविषयत्वोपपादनेन तयोर्विरोधगन्धाभावात्। विधीनां प्रतिषेधबाध्यत्वानुपपत्तेः। तदुक्तं वरदाचार्यैस्तत्त्वसारे 'ब्रह्मणो गुणविकारशरीरभेदकर्मादिगोचरविधिप्रतिषेधवाचः। अन्योन्यभिन्नविषया न विरोधगन्धमर्हन्ति तन्न विधयः प्रतिषेधबाध्याः' इति। अथान्तर्यामिणमहंग्रहेणानुसन्धत्ते—**योऽसावसौ पुरुषस्सोऽहमस्मीति**। असावसाविति वीप्सा आदरार्था। यद्वा-अदश्शब्दौ विभज्य यत्तच्छब्दाभ्यामन्वेतव्यौ। कथमिति

श्री॥आदित्यमन्तरो यमयति'॥ बृ॥ ५॥ ७॥ ९॥ 'ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति। भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया'॥ गी॥ १८॥ ६१॥ इत्यादिश्रुतिस्मृतिबलात्परमात्मगुणत्वसिद्धेश्च दर्शितसामानाधिकरण्यनिर्देशेनास्या विद्याया लोकप्रेरणपोषणक्रियामुख्यकारणत्वस्यापि शब्दव्युत्पत्तिबलाद्धर्मिपारतन्त्र्येण परमात्मनि भानसम्भवात्। यमसंज्ञा च दर्शितप्रेरणपोषणक्रियाकारणत्वलक्षणनियन्तृत्वरूपप्रवृत्तिनिमित्तबलाद्रविमण्डलान्तर्वर्तिभगवतः 'यमो वैवस्वतो राजा यस्तवैष हृदि स्थितः। तेन चेदविवादस्ते मा गङ्गां मा कुरून् गमः'॥ म॥ स्मृ॥ ८॥ ९२॥ इति स्मृतिवचनेनापि सिद्धा। अत्र हि वैवस्वतशब्दः—विवस्वति भव इति व्युत्पत्त्या सूर्यमण्डलवर्तिभगवत्पर एव, न तु दक्षिणदिक्पतिपरः, 'यस्तवैष हृदि स्थितः' इत्युक्तस्य भगवदसाधारणधर्मस्य सर्वभूतहृद्देशवर्तित्वस्य तत्रासम्भवात्। **रश्मीन्**—त्वदधिष्ठानभूतसूर्यमण्डलसम्बन्धिन उग्रकिरणान् समन्ततः प्रसृतान्, **व्यूह** - क्वचिदेकदेशे पुञ्जीकुरु, **तेजः**—त्वदीयरूपसम्बन्धि प्रभामण्डलं च समन्ततः प्रसृतं, **समूह**—क्वचिदेकदेशे पुञ्जीकुरु 'ऊह वितर्के' इत्यस्य धातोरात्मनेपदिनः पुञ्जीकरणार्थकत्वं परस्मैपदं चोपसर्गवशाद्भवति। उपसर्गवशात्प्रहाराहारादिशब्देषु हरणार्थकस्य धातोरिवेहाप्यर्थान्तरमुपपद्यते। अस्य धातोरात्मनेपदस्य—'उपसर्गादस्यत्यूह्योर्वेति वाच्यम्' इति वार्तिकेनोपसर्गपूर्वकत्वदशा-

१. मनु. १-७॥
२. अष्टा. १-४-१०७॥
३. छा. १-६-७॥
४. आत्मोपनिषत्॥
५. श्वे. ६-१९॥
६. वि. पु. १-२-१॥
७.
८. कठो. २-१-११॥
९. श्वे. ६-१९॥
१०. मु. १-१-६॥ ११. तत्त्वसारे. ६९॥

वे॥मात्मतायामुत्तमनिवृत्तिः। एवं 'तत्त्वमसि' इत्यादिषु असिशब्दो निर्वाह्यः । तत्रापि 'युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः' इत्येतावदेवहि स्मर्यते । न तु युष्मच्छब्दस्य स्वाभिमुखचेतन-द्वारा तदन्तर्यामिपर्यन्तत्वे मध्यमनिवृत्तिः । लोके तु 'अहं त्वमसि' 'त्वमहमसि' इत्याद्युपचारेषू-द्देश्यानुसारेण मध्यमोत्तमयोर्व्यवस्था । तद्वदत्रापि व्यवस्थोपपद्यते, उद्देश्यविषययोरेवात्र युष्मदस्म-च्छब्दयोरुपपदत्वेन सूत्रपदाभिप्रेतत्वात् । भाष्ये तु तत्त्वमसिनिरूपणावसरे 'नात्र किञ्चिदुद्दिश्य किमपि विधीयते' इत्युक्तिरप्राप्ताशनिषेधाभिप्राया व्यक्ता, उपसंहारत्वोपपादनात् । ये पुनः 'तत्त्व-

कू॥चेत्-इत्थं-योऽसौ पुरुषः, अह सोऽसावस्मीति। यद्यपि पुरुषशब्दः 'प्रकृतिं पुरुषं चैव विद्ध्यना-दी उभावपि' 'योगो योगविदां नेता प्रधानपुरुषेश्वरः' इत्यादिषु जीववाचितया प्रसिद्धः, तथापि 'तेनेदं पूर्णं पुरुषेण सर्वं' 'पूर्वमेवाहमिहासमिति तत्पुरुषस्य पुरुषत्वं' 'महान् प्रभुर्वै पुरुषस्सत्त्वस्यैष प्रवर्तकः' इत्यादिश्रुत्या पूर्णत्वपूर्वसत्त्वादिगुणकसर्ववेदपठितपुरुषसूक्तादिप्रसिद्धो महापुरुष एवेह पुरुषशब्देन विवक्षितः । ननु 'योऽसौ पुरुषस्सोऽसावहमस्मि' इति कथ सामानाधिकरण्यम् , अहं-पदार्थस्य जीवात्मनः परमपुरुषाद्भिन्नत्वादिति चेन्न—अहशब्देनापि अस्मदर्थान्तर्यामिण एवाभिधा-नेन अहं स इति निर्देशस्य सुसङ्गतत्वात्। ननु च अहंशब्दस्य प्रत्यगर्थान्तर्यामिपरत्वे सोऽस्मीत्युत्त-मपुरुषो न घटते, नहि मदन्तर्यामी परमपुरुषोऽस्मीत्यन्वयो युज्यत इति चेत् , उच्यते-मदन्तर्या-मीत्यादिशब्दान्तरेणोपस्थापिते प्रत्यगर्थान्तर्यामिणि उत्तमपुरुषान्वयासम्भवेऽपि अहमित्यस्मत्पदोप-स्थापिते तस्मिन्नुत्तमपुरुषान्वयो युज्यत एव । तथा हि पाणिनिसूत्रम् 'अस्मद्युत्तमः' इति । प्रत्यगर्थ-बोधकास्मच्छब्दोपपदे उत्तमपुरुषो भवतीत्यर्थः । न पुनरस्मच्छब्दस्य प्रत्यगर्थद्वारा परमात्मपर्यन्तता-

श्री॥या वैकल्पिकत्वविधानादिह परस्मैपदम्।रविमण्डलरश्मीना रूपप्रभामण्डलस्य च क्वचित्पुञ्जीकरणं किमर्थमित्यत्राह—**यत्त** इत्यादिना । **यत्**, **कल्याणतमं** - सर्वेषु कल्याणेषूत्तमं कल्याणं, स्वेतर-सर्वातिशायिमाङ्गल्यपरमशुभाश्रयभूतं, **ते**-तव, **रूपम्**-अप्राकृतदिव्यविग्रहः, अस्ति, यदिति—'वे-दाहमेतं पुरुषम्महान्तमादित्यवर्णं तमसस्तु पारे' ॥ पु ॥ सू ॥ 'यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिं'॥ मुं ॥ ३ ॥ १॥ ३ ॥ 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रु-र्हिरण्यकेश आप्रणखात्सर्व एव सुवर्णः । तस्य यथा कप्यास पुण्डरीकमेवमक्षिणी तस्योदिति नाम स एष सर्वेभ्यः पाप्मभ्य उदितः । उदेति हवै सर्वेभ्यः पाप्मभ्यो य एव वेद' ॥ छा ॥ १ ॥ ६ ॥ ६ ॥ ७ ॥ 'तस्य हैतस्य पुरुषस्य रूपं यथा माहाराजनं वासो यथा पाण्ड्वाविकं यथेन्द्रगोपो यथा-ग्न्यर्चिर्यथा पुण्डरीकं । यथा सकृद्विद्युत्तं सकृद्विद्युत्तेवहवा अस्य श्रीर्भवति य एवं वेद' ॥ बृ ॥ ४ ॥ ३ ॥ ६ ॥ इत्यादिश्रुत्यन्तरप्रसिद्धिरुच्यते । ते, **तत्**—रूप, **पश्यामि**-द्रष्टुमिच्छामि, त्वदधिष्ठाना-दित्यरश्मिमण्डलस्योग्रस्यास्मद्दृष्टिप्रसरणप्रतिबन्धकत्वात्त्वद्रूपस्य समन्ततः प्रसृतेन प्रभामण्डलेन दुर्द-र्शत्वाच्च तदुभयमुपसंहरसि चेत्त्वद्रूपं साक्षात्कर्तुं काङ्क्षामि, तथा कुर्विति प्रार्थनं क्रियते । 'आशंसायां भूतवच्च' ॥ ३ ॥ ३ ॥ १३२ ॥ इत्यनुशासने चकारेणाशसायां भविष्यत्यपि वर्तमानवद्भावविधा-

१. छा. ६-८-७ ॥
२. अष्टा. १-४-१०५ ॥
३. श्रीभाष्ये. १-१-१. अन्ते ॥
४. गीता. १३-१९ ॥
५. सहस्रनामाध्याये ॥
६. श्वे. ३-९ ॥
७. यजुषि. तै. आरणे. १ ॥
८. श्वे. ३-१२ ॥ ९. अष्टा. १-४-१०७॥

वे॥मसि' 'सोऽहमस्मि' इत्यादिषु कार्यकारणोपाध्याकारविधूननेन निर्विशेषस्वरूपैक्यं वाक्यवेद्यमाहुः, तेषाम् असिवदस्मिरपि खण्डकः।श्रोतर्यनुसन्धातरि च युष्मदस्मदीहि परित्यक्ते । न ह्यसिना कश्चित्प्रतिबोधनीयः, न च कश्चिदस्मिना विशिष्यानुसन्धेयः। विधूननीयोपाधिविषयव्युत्पत्तिमच्छब्दसन्निधिमात्रोपजीवनेन क्वचिन्मध्यमोत्तमसम्पत्तिरिति चेत्—ततो वरमपरित्यक्तप्रवृत्तिनिमित्तमस्माकं निर्वहणमनुसर्तुम् । सन्मात्रस्याशिनोऽशद्वयविशिष्टताप्रतिपादनं वदतामपि सन्मात्रविवक्षायामत्र वाक्ये त्वमहंभावायोगात्, त्वं चाहंताविशिष्टं सदिति विशिष्टविवक्षायामपि प्रथमपुरुषोपनिपातप्रसङ्गात् । इत्थयोश्च युष्मदस्मदर्थयोर्मृत्पिण्डांशे मणिक इव घटशरावाकारयोस्सदंशभूतेश्वराकारेऽपि समन्वयायो-

कू॥यामुत्तमनिवृत्तिरिति, 'अधिकं तु प्रविष्टं न तु तद्धानिकरम्' इति न्यायात्।एवं'तत्त्वमसि'इत्यादिष्वपि असीति मध्यमपुरुषो निर्वाह्यः, त्वपदेनाभिमुखचेतनद्वारैव तदन्तर्यामिणोऽभिधानाभ्युपगमात् । तत्रापि 'युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः' इत्येतावदेवहि स्मर्यते। न तु युष्मच्छब्दस्य स्वाभिमुखचेतनद्वारा तदन्तर्यामिपर्यन्तत्वे मध्यमनिवृत्तिरपि। ये तु 'तत्त्वमसि' 'सोऽहमस्मि' इत्यादावहन्त्वमादिशब्दे युष्मदस्मदर्थपरित्यागेन निर्विशेषचिन्मात्रस्वरूपैक्यमेव वाक्यवेद्यमाहुः, तानेव 'तत्त्वमसि' इत्यादिवाक्येषु असिरिव 'सोऽहमस्मि' इति वाक्यस्थास्मिरपि खण्डयति। श्रोतर्यनुसन्धातरि च युष्मदस्मदी हि तैः परित्यक्ते। न हि तेषामसिना कश्चित्प्रतिबोधनीयोऽस्ति,न च कश्चिदस्मिना विशिष्यानुसन्धेयः । ननु प्रकृते युष्मदस्मदर्थयोरविवक्षायामपि तयोर्व्युत्पन्नयुष्मदस्मच्छब्दोपपदमात्रोपजीवनेन अस्मत्पक्षेऽपि क्वचिन्मध्यमोत्तमयोरुपपत्तिरिति चेन्न, ततोऽप्यपरित्यक्तप्रवृत्तिनि-

श्री॥नादत्र पश्यामीति लट्प्रयोगः । मद्रूपदर्शने तवाधिकार एव कथं 'नाहं वेदैर्न तपसा न दानेन न चेज्यया। शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा । भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन । ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुञ्च परन्तप' ॥ गी ॥ अ ॥ ११ ॥ श्लो ॥ ५३ ॥ ५४ ॥ इत्यादिभिर्मय्यनन्यभक्तिमत एव हि मद्रूपदर्शनेऽधिकारस्सिद्धः । मय्यनन्यभक्तिश्च सर्वात्मना मन्नियाम्यत्वरूपमदधीनभावपर्यवसन्नमद्दास्यैकरूपा । तद्रहितस्य कथं तवाधिकार इत्यत्राह—**योऽसावित्यादिना** । **असावसौ** —अत्यन्तमद्विप्रकृष्टादित्यमण्डलान्तर्वर्ती, **पुरुषः**—'य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते' इत्याद्युक्तलक्षणः, **यः**, **त्वमसि**, **अहं**, **सः**—तादृशपुरुषरूपस्त्वमेव, **अस्मि**, त्वदात्मक एवास्मीत्यर्थः । अत्र जीवपरयोश्शरीरशरीरिभावमूलेन सामानाधिकरण्यनिर्देशेन शरीरशरीरिभावप्रतीत्या स्वस्य परमात्मशरीरभावज्ञापनमुखेन सर्वात्मना तन्नियाम्यत्वरूपतदधीनत्वप्रदर्शनेन तादृशभगवद्रूपदर्शनाधिकार एव ज्ञापितो भवति । यद्यपि—'यस्य सर्वाणि भूतानि शरीरम्' ॥बृ ॥ ५ ॥ ७॥ १५ ॥ इत्यादिभिस्सर्वेषामेव चिदचिद्वस्तूनां परमात्मशरीरत्वं तुल्यं, तथापि—तादृशवस्तुस्वरूपस्थितेस्सर्वसाधारण्येऽपि तदभ्युपगमपूर्वकतदनुगुणवर्तनं हि न सर्वसाधारणम् । तादृशवर्तनमेवचात्रास्मीत्यनेन विवक्षितम् । तदेवच तद्दर्शनाधिकारप्रयोजकमितरव्यावृत्तमिह दर्शितम् - ईदृशमेव च वर्तनमविवादशब्देन मनुनापि दर्शितं—'यमो वैवस्वतो राजा यस्तवैष हृदि स्थितः । तेन चेदविवादस्ते मा गङ्गाम्मा कुरून् गमः' ॥ मनु॥ ८ ॥ ९२ ॥ इत्यत्र तादृशमेव च वर्तनं भक्त्यादिलक्षणपरविद्यापरमकाष्ठापीत्यत एव भगवद्रूपदर्शने स्वस्याधिकारो दर्शितो भवतीति भाव इति ॥ ५ ॥ **एतेन**-

१. छा. ६-८-७ ॥ | २. अष्टा. १-४-१०५ ॥

वे॥गात् त्वमहमर्थयोस्सत्ताद्याकारस्य नित्यप्रतिपन्नतया विशेषतोऽनिर्देश्यत्वादननुसन्धेयत्वाच्च न कथञ्चिदपि 'तत्त्वमसि' 'सोऽहमस्मि' इत्यादेर्निर्वाहश्शक्यः। दृष्टिविधिस्तु मोक्षार्थविद्यासु वेदान्तवादिना नाङ्गीक्रियते । यद्यप्यत्र 'त्व राजासि' 'अहं राजास्मि' इत्यादिवत्तादधीन्याद्युपचारविवक्षया मध्यमोत्तमयोस्सामञ्जस्य, तथापि लोकवेदयोश्चेतनपर्यन्तदेवमनुष्यादिव्यवहारन्यायेन जातिगुणशब्दगति-

---

कू॥मित्तकस्य अस्माकं निर्वहणस्यैवानुसर्तुमुचितत्वात्।अपरे त्वाहुः'योऽसावसौ पुरुषस्सोऽहमस्मि'इत्यत्र पुरुषशब्देन परमपुरुषो न विवक्षणीयः, तथा सति अस्मीत्युत्तमस्य 'पुरुषः' इत्याख्यायाः'सोऽहम्' इति च सामानाधिकरण्यस्य क्लेशेन निर्वाह्यत्वात् । ततो वरमत्र पुरुषशब्दस्य परिशुद्धजीवात्मपरत्वमाश्रयितुम् । एवञ्च सति यःपुरुषो मुक्तदशाभाव्याकारः परिशुद्धजीवात्मा सोऽहमस्मीत्यन्वयादुत्तमस्य 'पुरुषः' इत्याख्यायास्सामानाधिकरण्यस्यचातिस्वरसो निर्वाह इति। नायंपक्षस्साधुः - तथा भवत्वेवमिह निर्वहणं, तथापि 'तत्त्वमसि' इत्यत्र तत्पदस्य 'त्वं वा अहमस्मि भगवो देवते अहं वै त्वमसि' इत्यादिषु त्वंपदस्य च परदेवतावाचकत्वेन त्वदुक्तनिर्वाहस्य तत्राभावादकामेनापि तत्रास्मदुक्तनि-

---

श्री॥'तव प्रसादात्तव रूपं पश्यामि,किञ्च-अहं न त्वां भृत्यवद्याचे;योऽसावादित्यमण्डलस्थो व्याहृत्यवयवः पुरुषः, स एवाहमस्मि' इत्युपासकस्य स्वस्मिन् सूर्यादिशब्दाभिलपनीयपुरुषस्वरूपैक्यानुसन्धानपरं शङ्करकृतं व्याख्यानमसमञ्जसमेवेति सिद्धं—तव प्रसादात्त्वद्रूपं पश्यामीत्यनुसन्धत उपासकस्य स्वास्मिन्नुपास्यस्वरूपैक्यानुसन्धानायोगात्. प्रसादस्य सेव्यसेवकभावलक्षणभेदसापेक्षत्वात्, परविद्याप्रकरणे सूर्यशब्दाभिलपनीयदेवताविशेषरूपदर्शनयाचनस्य तदर्थमनपेक्षिततदैक्यानुसन्धानस्यचाप्रसक्तत्वादनुपयुक्तत्वाच्च ॥ ६ ॥ किञ्च—'यत्ते कल्याणतमं रूपं - तत्ते पश्यामि' इति प्रसिद्धवदभिधीयमानस्य कल्याणतमरूपस्य-'यएषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते'॥ छां॥ १ ॥ ६ ॥६॥ इत्यादिश्रुत्यन्तरप्रसिद्धपरमात्मदिव्यरूपतायाः प्रत्यभिज्ञायमानत्वेन तादृशरूपस्य पुरुषस्य सूर्याख्यदेवताविशेषरूपत्ववर्णनमपि न साधु-दर्शितश्रुत्यन्तरस्य—'अन्तस्तद्धर्मोपदेशात्' ॥ शा ॥ १ ॥ १ ॥ २१ ॥ इत्यधिकरणे स्वासाधारणदिव्यरूपविशिष्टपरमात्मलक्षणपरमपुरुषपरतायास्तस्य पुरुषस्य सूर्याख्यदेवताविशेषव्यावृत्तधर्मविशेषनिर्देशप्रत्यक्षतद्भेदनिर्देशादिभिर्हेतुभिस्सूत्रकारेणैव स्थापितत्वात् ।। ७ ।। अत्र प्रत्यगात्मपरस्याहशब्दस्य परमपुरुषपरस्य पुरुषशब्दस्य च सामानाधिकरण्यनिर्देशस्तयोश्शरीरशरीरिभावनिबन्धनः ।। ८ ।। न तु स्वरूपैक्यनिबन्धनः ।। ९ ।। ततश्च—'अहं स पुरुषोऽस्मि' इत्यनेन सामानाधिकरण्यनिर्देशेन स्वस्मिन् परमपुरुषशरीरभूतत्वप्रतिसन्धानपरेण भक्तिपर्यवसन्नस्य शरीरवत्सर्वात्मना तदधीनवृत्तिकत्वस्य ज्ञापनसिद्ध्या भगवद्दिव्यरूपदर्शने स्वस्याधिकारो ज्ञापितो भवति।।१०।।

ननु कथमत्राहंपदपुरुषपदयोस्सामानाधिकरण्यं सम्भवति—तत्पदप्रयोज्यविषयतानिरूपिततादात्म्यनिष्ठसंसर्गतानिरूपितशाब्दबोधीयविषयताप्रयोजकत्वस्यैव तत्पदेनैतत्पदस्य सामानाधिकरण्यरूपत्वात्, सम्प्रति पुरुषपदार्थस्यास्मीतिधात्वर्थ एवान्वयेनाहंपदार्थेऽन्वयस्यैवाभावात् १ एवम्—अस्तेर्धातोराधेयत्वमर्थः, 'भूतले घटोऽस्ति' इत्यादौ घटादिषु भूतलादिनिरूपिताधेयताया एव बोधदर्शनात् - २ - इत्थञ्च 'अहं स पुरुषोऽस्मि' इत्यत्रासधात्वर्थाधेयतायां पुरुषपदार्थस्य परमात्मन आधेयतासम्बन्धेन तद्विशेषणपुरुषत्वस्य अवच्छेद्यतासम्बन्धेन चान्वये 'पुरुषत्वावच्छिन्नपरमात्मनिष्ठाधेयतावानहम्' इत्येव बोधसम्भवेन वाक्यस्य बाधितार्थकत्वप्रसङ्गो दुर्वारः,

---

१. 'जाबालाः' इति शङ्करभाष्ये. ३-३-३७ ॥

वे॥लाभात्तदुपेक्षा। नन्वेवं पुरुषाख्यस्वेतरात्मसामानाधिकरण्यक्लेशं परित्यज्य 'योऽसावसौ पुरुषस्सोऽहमस्मि' इति परिशुद्धस्वरूपमात्रानुसन्धानपरमिदं वाक्यमस्तु ; मैव, 'तत्त्वमसि' 'त्वं वा अहमस्मि' इत्यादिषु तदनुपपत्तेः; अत्रापि तत्समानन्यायतया तथैवानुसन्धानस्यौचित्यात्। 'ब्रह्मात्मकोऽहमस्मि' इति परविद्याङ्गभूतस्वात्मानुसन्धानपरत्वेऽपि तच्छब्देन तादधीन्यादिकं लक्षणीयं स्यात्॥ १६॥

---

कू॥र्वाहस्य समाश्रयणे तत्समानन्यायतयाऽत्रापि तस्यैवानुसर्तुमुचितत्वादिति। स्यादेतत्। 'त्वं वा अहमस्मि भगवो देवते अहं वै त्वमसि' इत्यत्र कथं पुरुषव्यवस्था, त्वमहंपदयोरुभयोरपि श्रवणात्। उद्देश्यविषयकमेव युष्मदादिपदम् उपपदत्वेन पाणिनिसूत्राभिमतं, तथाचोद्देश्यसमर्पकोपपदवशादेवात्र मध्यमोत्तमयोर्व्यवस्था सिद्ध्यतीति चेत्—अस्त्वेवमिह समाधानं, तथापि 'तत्त्वमसि' इत्यत्र पुरुषव्यवस्था न घटते, तत्र त्वंपदयोगवत्तत्पदयोगस्यापि सत्त्वात्। तथा चासीतिवदस्तीति प्रथमपुरुषस्यापि प्रसङ्गः, न ह्यत्रापि त्वंपदमुद्देश्यसमर्पकं, येन त्वंपदमेव पुरुषनिमित्तं न तत्पदमपीति व्यवस्था स्यात्। तथा च तत्त्वमसिनिरूपाणावसरे भाष्ये 'नात्र किञ्चिदुद्दिश्य किमपि विधीयते' इति।

---

श्री॥पुरुषत्वावच्छिन्नपरमात्मनिष्ठाधेयताया अहपदार्थप्रत्यगात्मनि बाधात् ३ - इति चेन्न - पुरुषपदस्यात्र पुरुषात्मकपरत्वेन पुरुषात्मकत्वरूपपुरुषपदार्थतावच्छेदकधर्मावच्छिन्नप्रत्यगात्मनिष्ठाधेयताया एवासधात्वर्थतया तस्याः प्रत्यगात्मनि बाधप्रसङ्गाभावात्, परब्रह्मान्तर्यामिकत्वरूप-पुरुषात्मकत्वस्य प्रत्यगात्मन्येव सम्भवात्, दर्शिताधेयताभानबलेनात्र पुरुषपदार्थब्रह्मात्मकत्व-विशिष्टस्यापि धर्मिपारतन्त्र्येण तादात्म्यसम्बन्धेनाहंपदार्थे भाननैयत्येनाहंपदेन पुरुषपदस्य यथोक्तलक्षणसामानाधिकरण्यसम्भवे क्षतिलेशाभावाच्च ॥ ११ ॥ ययोश्शरीरशरीरिभावोऽस्ति, तयोश्शरीरवाचकानां शरीरिबोधकत्वमिव शरीरिवाचकानां शरीरबोधकत्वमप्यस्त्येव, शरीरशरीरिभावलक्षणापृथक्सिद्धिमहिम्नेतीह पुरुषशब्दस्य ब्रह्मात्मकत्वेन प्रत्यगात्मपरत्वमव्याहतम्॥ १२ ॥ अत एव श्रीविष्णुपुराणे 'ज्ञानं विशुद्धं विमलञ्च नित्यमशेषलोभादिनिरस्तसङ्गम्। एकं सदैकं परमः परेशस्स वासुदेवो न यतोऽन्यदस्ति' ॥ २ ॥ १२ ॥ ४३ ॥ इति श्लोके विशुद्धप्रत्यगात्मस्वरूपवाचिज्ञानपदस्य वासुदेवपदेन - 'एकस्समस्तं यदिहास्ति किञ्चित्तदच्युतो नास्ति परं ततोऽन्यत्। सोऽहं स च त्वं स च सर्वमेतदात्मस्वरूपं त्यज भेदमोहम्॥ २ ॥ १६ ॥ २३ ॥ इति श्लोके चेतनाचेतनवाचिशब्दानां परमात्मवाचिशब्दैश्च सामानाधिकरण्यव्यपदेशः कृतो यथोक्तनीत्यैव ॥ १३ ॥ अत्र प्रथमश्लोकं व्याकुर्वद्भिर्भाष्यकारैर्जिज्ञासाधिकरणभाष्ये 'तच्च वासुदेवशरीरमिति तदात्मकम्, अतदात्मकस्य कस्यचिदप्यभावात्' इति ज्ञानशब्दवाच्यमात्मस्वरूपं तच्छब्देन परामृश्य तस्य वासुदेवशरीरतया वासुदेवात्मकत्वोपपादनेन ज्ञानपदार्थप्रत्यगात्मस्वरूपनिष्ठविशेष्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नवासुदेवात्मकत्वावच्छिन्नप्रकारताशालिबोधजनकत्वं दर्शयित्वा - 'ज्ञानं वासुदेवः' इति शब्दयोस्सामानाधिकरण्यमुपपादितम्॥ १४ ॥ एवमेव श्रीविष्णुचित्तार्यैरप्येतदनुसारिभिरत्र व्याख्यानं कृतम्॥ १५ ॥ उदाहृतद्वितीयश्लोकेऽपि यदिहास्ति किञ्चित्तत्समस्तम् - एकोऽच्युत एव - तदात्मकमित्यर्थ इति व्याकुर्वद्भिस्तैस्तद्रीत्यैव सामानाधिकरण्यमुपपादितं चेतनाचेतनरूपसर्वद्रव्यवाचिसमस्तपदेन भगवद्वाचिनोऽच्युतपदस्य ॥ १६ ॥ एवं—'ज्योतींषि विष्णुर्भुवनानि विष्णुर्वनानि विष्णुर्गिरयो दिशश्च। नद्यस्समुद्राश्च स एव सर्वं यदस्ति यन्नास्ति च विप्रवर्य'॥२॥१२॥३८॥ इति श्लोकेऽपि ज्योतिरादिशब्दानां भगवद्वाचिशब्देन सामानाधिकरण्यनिर्देशो भगवद्वाचिशब्दस्य भगवदात्मकपरत्वाभिप्रा-

---

१. 'जाबालाः' इति शङ्करभाष्ये. ३-३-३७ ॥

कू॥तस्मात् 'तत्त्वमसि' इतिवत् तत्त्वमस्तीति प्रयोगोऽपि दुर्निवार इति। अत्रोच्यते 'तत्त्वमसि' इत्यत्रापि त्वंपदार्थ उद्देश्य एव। ततश्चोद्देश्यविषयकयुष्मत्पदवशात्तत्र मध्यम एवेति न प्रथमपुरुषप्रसङ्गः। नन्वेवं भाष्यविरोध इति चेन्न-भाष्यस्य विधेयांशमात्रनिषेधपरतयोद्देश्यांशनिषेधकत्वाभावात्। तथा हि न ह्येवं भाष्याभिप्रायः, नात्र किञ्चिदुद्दिश्यते, न च किञ्चिद्विधीयत इत्यपि। तर्ह्येवं भाष्याभिप्राये त्वपदेन किञ्चिदुद्दिश्यत एव, किंतूद्दिष्टेन किञ्चिद्विधीयत इति कथमिदमवगम्यत इति चेन्न, प्रातस्यैवोपसंहारकत्वोपपादकभाष्येणैव विधेयांश एव निषिध्यते इत्यभिप्रायस्य व्यक्तत्वात्। अन्योऽप्याह—'त्वं राजासि' 'अह राजास्मि' इत्यादिवत्तादधीन्याद्युपचारविवक्षया 'तत्त्वमसि' 'सोऽहमस्मि' इत्यादिषु मध्यमोत्तमसामानाधिकरण्यानां सामञ्जस्यमिति, तदप्युपेक्षणीयमेव। लोकवेदयोश्चेतनपर्यन्तदेवमनुष्यादिव्यवहारबलेन जातिगुणशब्दवन्मुख्यवृत्त्यैव निर्वाहसम्भवे उपचारकल्पनस्यान्याय्यत्वादित्यलं विस्तरेण ॥ १६ ॥

श्री॥येणैव कृतः ॥ १७ ॥ उक्तं हि जिज्ञासाधिकरणश्रीभाष्ये पुराणषट्के-'तदिदं शरीरात्मभावायत्तं तादात्म्यं सामानाधिकरण्येन व्यपदिश्यते—ज्योतींषि विष्णुरिति। अत्रास्त्यात्मकं नास्त्यात्मक च जगदन्तर्गतं वस्तु विष्णोः कायतया विष्ण्वात्मकम्' इत्युक्त्याऽलत्यविष्णुपदस्य विष्ण्वात्मकपरत्वं भाष्यकारैः ॥ १८ ॥ एवं—'सर्वत्र प्रसिद्धोपदेशात्' ॥ १ ॥ २ ॥ १ ॥ इति सूत्रभाष्ये—'सर्वं खल्विदं ब्रह्म' इति श्रुतौ ब्रह्मपदस्य ब्रह्मात्मकपरत्वमाश्रित भाष्यकारैरित्यवगम्यते ॥ १९ ॥ एवं—'क्षेत्रज्ञ चापि मां विद्धि सर्वक्षेत्रेषु भारत' ॥ १३ ॥ २ ॥ इति गीताश्लोकभाष्ये-'देवमनुष्यादिक्षेत्रेषु वेदितृत्वैकाकारं क्षेत्रज्ञ च,मां विद्धि-मदात्मकं विद्धि'इति व्याकुर्वद्भिर्भाष्यकारैश्शरीरशरीरिभावनिबन्धनसामानाधिकरण्यनिर्देशस्थलेषु शरीरिभूतब्रह्मवाचकशब्दानां ब्रह्मात्मकपरतयापि सामानाधिकरण्यनिर्देशनिर्वाहसम्भवतीति दर्शितम्॥२०॥ न च नामरूपव्याकरणश्रुत्या शरीरवाचकानां शब्दानामपर्यवसानवृत्त्या शरीरिबोधकतासिद्ध्या शरीरभूतचेतनाचेतनवाचिशब्दानां तच्छरीरकपरमात्मपर्यन्तबोधकतासिद्धावपि शरीरिभूतपरमात्मवाचिशब्दाना तदात्मकचेतनाचेतनपर्यन्तबोधकत्वासिद्धेरिह परमात्मवाचिनः पुरुषशब्दस्य परमपुरुषात्मकत्वेन प्रत्यगात्मपरत्वं विना लक्षणां न सम्भवति, लक्षणाकल्पनं चायुक्तं—'तत्त्वमसि' इत्यादौ त्वंपदस्येवात्राप्यहंपदस्य प्रत्यगात्मवाचिनस्तच्छरीरकपरमात्मपरतासम्भवेन मुख्यवृत्त्यैव सामानाधिकरण्यनिर्वाहसम्भवादिति वाच्यम्, 'अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि' ॥ छां ॥ ६ ॥ ३ ॥ २ ॥ इत्यादिनामरूपव्याकरणश्रुत्या 'अनुप्रविश्य'इत्यनुप्रवेशस्य नामरूपव्याकरणप्रयोजकतां प्रदर्श्य तद्बलेनैव तत्तन्नाम्नां शक्तिव्यवस्थापनदर्शनेन तत्र यया युक्त्या चेतनाचेतनशब्दानां परमात्मवाचकता सिद्ध्यति, तयैव युक्त्या परमात्मवाचिशब्दानां तदात्मकत्वेन तच्छरीरवाचकताया अपि सिद्धेस्तदपह्नवायोगात् ॥ २१ ॥

इदमत्रावधेयम्—इयं श्रुतिर्लोकव्युत्पत्तिसिद्धतत्तत्पदार्थवाचकताकशब्दानां परमात्मपर्यन्तवाचितां कथं प्रतिपादयतीति तावद्विवेचनीयं १ तत्तच्छब्दवाच्येषु पदार्थेष्वपृथक्सिद्धतया परमात्मनस्संबद्धत्वात्पृथक्सिद्ध्यनर्हसम्बन्धविशेषेण तत्तत्पदार्थविशिष्टेऽपि तत्तन्नाम्नां शक्तिरिति युक्त्यैव परमात्मपर्यन्तवाचिता तत्तन्नाम्नां प्रतिपादितेत्यवगम्यते-२-एवमेवच परमात्मवाचिशब्दानामपि तत्तत्पदार्थानां परमात्मन्यपृथक्सिद्धतया सम्बद्धत्वादेव पृथक्सिद्ध्यनर्हसम्बन्धविशेषेण तद्विशिष्टवाचकतापि तयैव श्रुत्या सिद्ध्यतीति न तदपह्नवः कर्तुं शक्यः-३-तदपृथक्सिद्धतया वर्तमानत्वमेव च तद्वाचकवाच्यत्वे

१. छा. उप. ६-८ ७ ॥

श्री॥तन्नमिति॥ २२ ॥ चेतनाचेतनानुप्रवेशेन तदपृथक्सिद्धतया वर्तमानत्वेन यथा चेतनाचेतनवाचकशब्दवाच्यत्वं परमात्मनस्सम्भवति, तथैव परमात्मापृथक्सिद्धतया वर्तमानत्वेन परमात्मवाचकशब्दवाच्यत्व चेतनाचेतनयोरपि सम्भवतीत्यभिप्रायेणैव च भाष्यकारैरपि प्रागुदाहृतस्थलेषु भगवद्वाचकशब्दानां तदात्मकत्वेन चेतनाचेतनपरता भाषिता॥२३॥'क्षेत्रज्ञं चापि मा विद्धि' ॥ गी ॥ १३॥ २ ॥ इति श्लोकगीताभाष्ये - चेतनाचेतनवाचिसमानाधिकरणतया प्रयुक्तस्य मामितिपरमात्मवाचिशब्दस्य 'मां विद्धि मदात्मक विद्धि'इति भगवदात्मकवाचित्वं व्याख्याय तदुपष्टम्भकतया 'यथा क्षेत्रं क्षेत्रज्ञविशेषणतैकस्वभावतया तदपृथक्सिद्धेस्तत्सामानाधिकरण्येनैव निर्देश्यं, तथा क्षेत्रं क्षेत्रज्ञश्च मद्विशेषणतैकस्वभावतया मदपृथक्सिद्धेर्मत्सामानाधिकरण्येनैव निर्देश्यौ विद्धि' इति भाषमाणैर्भाष्यकारैः-तदपृथक्सिद्धतया वर्तमानत्वमात्रमेव तद्वाचकवाच्यत्वे तन्त्रं, न तु तद्विशेष्यतया वर्तमानत्वमपीति स्पष्टमेव दर्शित भवति . अन्यथा इह मामित्यस्य मदात्मकत्वेन चेतनाचेतनवाचकत्वोपष्टम्भकतायास्तद्ग्रन्थस्यासिद्धेः ॥ २४ ॥ तदेतत्सर्वं—नामरूपव्याकरणश्रुतिबलेन सिद्ध्यति वाच्यवाचकभावे—नाम्नां लोकव्युत्पत्तिसिद्धस्वार्थविशिष्टत्वरूपशक्यतावच्छेदकशरीरेऽपृथक्स्थितिप्रयोजकसम्बन्धविशेष एव स्वार्थवैशिष्ट्यघटकतया प्रविष्टः—न तु तत्र विशेष्यभावनियामकत्वमपि सम्बन्धे निवेश्यं, प्रयोजनाभावाद्गौरवाद्विपरीतानां बहूनां स्वारसिकप्रयोगाणाम्मुख्यत्वानिर्वाहप्रसङ्गात्, सम्भवति मुख्यतया निर्वाहे तदुपेक्षणायोगाच्च । इत्थञ्च चेतनाचेतनवाचिशब्दानां शरीरितासम्बन्धेन तद्विशिष्टपरमात्मवाचितावत्परमात्मवाचिशब्दानामपि शरीरतासम्बन्धेन तद्विशिष्टचेतनवाचित्वमपि सम्भवति, शरीरशरीरिभावसम्बन्धस्य चेतनाचेतनयोः परमात्मनश्चापृथक्स्थितिनियामकतया तेषां परस्परापृथक्सिद्धताया अव्याहतत्वात् । तस्माच्चेतनाचेतनवाचिशब्दाना परमात्मवाचिशब्दानाञ्च परमात्मविशेष्यक बोधजनकसामानाधिकरण्यनिर्देशवच्चेतनाचेतनविशेष्यकबोधजनकसामानाधिकरण्यदिर्देशोऽपि मुख्य एवेत्यभिप्रायेणैव कृतमिति स्पष्टमेवावगम्यते ॥ २५ ॥ इत्थञ्च —'नद्यस्समुद्रान्तःप्रविष्टास्समुद्र एव भवन्ति'-'पल्लवपुष्पफलशाखादिकं सर्वं वृक्ष एव' इत्यादयस्स्वारसिकनिर्देशा अपि मुख्यतयैव निर्व्यूढा भवन्ति ॥ २६ ॥ न च शरीरवाचकानां शरीरिवाचकत्वाभिप्रायकबहुतरनिर्देशदर्शनेन भाष्यकृतां-शरीरवाचकशब्दानां शरीरिण्येव शक्तिः, शरीरिवाचकानां तु शरीरबोधकतया क्वाचित्के निर्देशो गौण इत्येवाभिप्राय इति वाच्यं,तत्तत्र भाष्यकृतां शरीरवाचकशब्दानां शरीरिवाचकत्वव वर्णनस्यापि शरीरशरीरिभावस्थलेऽपृथक्सिद्धिनैयत्येन तद्बलेनैव तेषां तद्वाचकत्वसम्भवाभिप्रायकत्वेन शरीरवाचकशब्दानामेव शरीरिवाचकत्वमित्यभिप्रायकत्वासम्भवात्; अन्यथा-'रसोऽहमप्सु कौन्तेय' ॥ गी ॥ ७ ॥ ८ ॥ 'पुण्यो गन्धः पृथिव्याञ्च' ॥ गी ॥ ७ ॥ ९ ॥ इत्यादिसामानाधिकरण्यनिर्देशानामनिर्वाहप्रसङ्गाच्च ॥ २७ ॥ तत्र हि रसगन्धादिषु द्रव्यत्वघटितशरीरत्वाभावेन तद्वाचकरसगन्धादिशब्दानामुक्तरीत्याश्रयणे परमात्मवाचिशब्देन सामानाधिकरण्यं दुरुपपादम् ॥ २८ ॥ अस्मत्पक्षे तु स्वाश्रयापृथक्सिद्धेरपि तत्रापृथक्स्थितिप्रयोजकत्वेन तत्सम्बन्धेन रसादिविशिष्टत्वेन परमात्मबोधकत्वसम्भवेन-'रसोऽस्मि' 'गन्धोऽस्मि' इत्यादिसामानाधिकरण्यं सूपपादम् ॥ २९ ॥ तस्मादिह 'अहं स पुरुषोऽस्मि' इत्यहंपदार्थप्रत्यगात्मविशेष्यकपुरुषपदार्थपरमपुरुषात्मकत्वावच्छिन्नप्रकारकबोधपरसामानाधिकरण्यनिर्देशोऽपि मुख्य एव सम्भवति ॥ ३० ॥

अथ-'अहं स पुरुषोऽस्मि' इत्यत्र पुरुषपदस्य परमपुरुषात्मकपरत्वे तदेकदेशभूतपरमपुरुषे तत्पदार्थान्वयो न सम्भवति, 'पदार्थः पदार्थेनान्वेति, न तु पदार्थैकदेशेन' इति व्युत्पत्तिविरोधात् ।

श्री॥परमपुरुषात्मकेऽपि तदन्वयो न सम्भवति,तत्पदार्थादित्यमण्डलान्तर्वर्ति परमपुरुषाभेदस्य प्रत्यगात्मनि बाधादिति चेन्न, 'चैत्रस्य गुरुः' गृहस्य पतिः' इत्यादौ गुरुत्वपतित्वादिपदार्थैकदेशे षष्ठ्यन्तपूर्वपदार्थचैत्रादिनिरूपितत्वान्वयदर्शनेन तादृशस्थलेष्विव 'गौरश्चैत्रो जानाति' 'अयं ब्राह्मण आत्रेयो विद्वान्' इत्यादिषु चैत्रब्राह्मणादिपदार्थशरीरविशेषावच्छिन्नात्मैकदेशशरीरे गौरात्रेयादिपदार्थान्वयदर्शनेन तादृशस्थलेष्वपि दर्शितव्युत्पत्तेस्सङ्कोचावश्यकत्वेनात्र पुरुषपदार्थैकदेशपरमपुरुषे तत्पदार्थान्वयस्वीकारे बाधकाभावात् ॥ ३१ ॥ दर्शितव्युत्पत्तेश्शब्दान्तरप्रयोज्यप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबोधं प्रति शब्दान्तरप्रयोज्योपस्थितेर्मुख्यविशेष्यतासम्बन्धेन हेतुत्वमित्येतत्परतया तत्र प्रकारताभिन्नत्वरूपमुख्यत्वघटकप्रकारताया ससम्बन्धिकपदाप्रयोज्यत्वापृथक्सिद्धिसम्बन्धानवच्छिन्नत्वयोर्निवेशे हि नोक्तद्विविधस्थलेष्वनुपपत्तिः, 'चैत्रस्य गुरुः' 'गृहस्य पतिः' इत्यादौ गुरुपत्यादीना ससम्बन्धिकपदत्वेन तत्प्रयोज्यगुरुत्वपतित्वादिनिष्ठप्रकारताया तादृशपदाप्रयोज्यप्रकारताभिन्नत्वानपायात् , 'गौरश्चैत्रो जानाति' 'अय ब्राह्मण आत्रेयो विद्वान्' इत्यादौ चैत्रब्राह्मणपदप्रयोज्यशरीरविशेषविशिष्टप्रत्यगात्मरूपतदर्थैकदेशशरीरनिष्ठप्रकारताया अपृथक्सिद्धिसम्बन्धावच्छिन्नत्वेन तदनवच्छिन्नप्रकारताभिन्नत्वानपायाच्च मुख्यविशेष्यतारूपत्वानपायेन तादृशविशेष्यतासम्बन्धेन गुरुत्वपतित्वशरीरादिषु शब्दान्तरप्रयोज्योपस्थितेर्जागरूकत्वात् ॥ ३२ ॥ इत्थं चात्रापि पुरुषशब्दार्थपरमपुरुषविशिष्टघटकपरमपुरुषे तादृशविशेष्यतासम्बन्धेन पुरुषशब्दप्रयोज्योपस्थितेस्सत्त्वेन तत्र तत्पदार्थान्वये न काचिदपि क्षतिरुपलभ्यते ॥ ३३ ॥ वस्तुतस्तु शरीरवाचकाना शरीरिणि वृत्तेः शरीरिवाचकाना शरीरे वृत्तेश्च प्रागुपदर्शितशरीरशरीरिभावापन्नार्थद्वयपरशब्दसामानाधिकरण्यनिर्देशाद्यनुरोधेन क्लृप्ततया तादृशवृत्तिज्ञानपूर्वकमेव तादृशस्थलेषु शाब्दबोधजननात् , शरीरिवाचकशब्दाना तदात्मकविषयकवृत्तिज्ञानस्य तेषा शरीरिभूततत्तत्पदार्थवाचकत्वरूपवृत्तिज्ञानपूर्वकतायाः शरीरवाचकशब्दाना तच्छरीरकविषयकवृत्तिज्ञानस्य तेषा शरीरभूततत्तत्पदार्थवाचकत्वरूपवृत्तिज्ञानपूर्वकतायाश्च नियतत्वेन तत्र प्राथमिकवृत्तिज्ञानाधीनपदार्थोपस्थित्योश्शरीरिभूतेषु शरीरभूतेषु च तत्तत्पदार्थेषु मुख्यविशेष्यतासम्बन्धेन नियमेन सत्त्वात्तत्र पदार्थान्तरान्वयस्वीकारे नानुपपत्तिगन्धः ॥ ३४ ॥ अत एव--'गभीरायां नद्या घोषः' इत्यादौ नदीशब्दार्थनदीतीरैकदेशनद्या गभीरपदार्थान्वयबोधोऽपि सङ्गच्छते, तत्र शक्त्यधीननद्युपस्थितिपूर्वकमेव लक्षणाधीननदीतीरोपस्थितेर्जननाच्छक्त्यधीननद्युपस्थितेस्तत्र कारणत्वसम्भवात् ॥ ३५ ॥ इत्थञ्च प्रकृतस्थले पुरुषपदजन्यपरमात्मोपस्थितेस्तन्मूलकतत्पदजन्यतदात्मकोपस्थितेश्च द्वयोरपि जननात्तत्र प्रथमोपस्थितिबलेन पुरुषशब्दार्थैकदेशपरमात्मनि स इति पदप्रतिपन्नार्थान्वयबोधजननेन न कश्चिद्विरोधः ॥ ३६ ॥

अथवा चिदचिद्वाचिशब्दार्थविशेष्यकपरमात्मवाचिशब्दार्थप्रकारकबोधपरसामानाधिकरण्यनिर्देशस्थलेषु परमात्मवाचिशब्दाना भगवदात्मके शक्त्यस्वीकारेऽपि तदर्थपरमात्मन एव तादात्म्यसम्बन्धेन चेतनाचेतनयोरन्वयस्वीकारेणापि सामानाधिकरण्यव्यपदेशनिर्वाहः संभवति । तादात्म्यनिष्ठसंसर्गतानिरूपितविषयताप्रयोजकत्वस्यैव सामानाधिकरण्यरूपत्वात् , भगवदात्मकत्वरूपतत्तादात्म्यस्य चेतनाचेतनयोरनपायाच्च॥ ३७ ॥ इत्थञ्च प्रागुदाहृतेषु स्थलविशेषेषु परमात्मपरशब्दाना तदात्मकपरतया भाष्यकारकृतव्याख्यानं तादात्म्यसम्बन्धेन परमात्मप्रकारकबोधजनकत्वाभिप्रायकं बोध्यम् ॥ ३८ ॥ इत्थं चैकदेशान्वयप्रयुक्तानुपपत्तिशङ्कागन्धस्यैव नावकाशः ॥ ३९ ॥ न च-'नीलमुत्पलम्' इत्यादौ स्वरूपैक्यलक्षणतादात्म्यस्यैव नीलपदार्थोत्पलपदार्थयोस्संसर्गतया भानदर्शनेन त-

श्री॥स्यैव सामानाधिकरण्यव्यपदेशनियामकता युक्ता;तत्कथं तादात्म्यशब्दसाधारण्यमात्रेण तदन्तर्यामिकत्वरूपतादात्म्यस्यापि तत्सामानाधिकरण्यव्यपदेशनियामकत्व सुवचमिति वाच्यं,तदन्तर्यामिकत्वरूपतादात्म्यस्यापि प्रयोगानुरोधेन सिध्यन्त्यास्सामानाधिकरण्यव्यपदेशनियामकताया दुरपह्नवत्वात् ॥ ४० ॥ तैत्तिरीयोपनिषदि नारायणे—'विश्वमेवेदं पुरुषस्तद्विश्वमुपजीवति' ॥ ११ ॥ इति 'येन सर्वमिदं प्रोतं पृथिवीचान्तरिक्षं च द्यौश्च दिशश्चावान्तरदिशाश्च स वै सर्वमिदं जगत् स च भूतं स भव्यम् ' ॥ ५० ॥ इति च श्रुत्या-'सर्वगत्वादनन्तस्य स एवाहमवस्थितः' ॥ वि ॥ १ ॥ १९ ॥ ८५ ॥ इति स्मृत्याच तदन्तर्यामिकत्वरूपतादात्म्यस्यापि सामानाधिकरण्यव्यपदेशनियामकताज्ञापनपूर्वकं चिदचिद्वाचिपदार्थविशेष्यकपरमात्मवाचिपदार्थप्रकारकबोधपरसामानाधिकरण्यनिर्देशो हि कृतो दृश्यते ॥ ४१ ॥ किञ्च-श्रीविष्णुपुराणे प्रागुदाहृते—'ज्ञानं विशुद्धम्' ॥ २ ॥ १२ ॥ ४३ ॥ इत्यादिश्लोके 'एकस्समस्तम्' ॥ २ ॥ १६ ॥ २३ ॥ इति श्लोकेच चिदचिद्वाचिपदार्थविशेष्यकपरमात्मवाचिपदार्थप्रकारकबोधपरसामानाधिकरण्यनिर्देशस्य चिदचितोर्भगवदन्तर्यामिकत्वलक्षणतत्तादात्म्यम्मूलमिति स्पष्टमेवावगम्यते ॥ ४२ ॥ अत्र प्रथमश्लोके ज्ञानशब्दवाच्यप्रत्यगात्मस्वरूपविशेष्यकवासुदेवशब्दार्थप्रकारकबोधपरतया—'ज्ञानं स वासुदेवः' इति सामानाधिकरण्यनिर्देशं कृत्वा 'न यतोऽन्यदस्ति' इत्यनेन-जगति भगवदन्तर्यामिकत्वलक्षणतदभेदरूपं तत्तादात्म्यमेव तत्र हेतुरिति हि दर्शितम्॥४३॥ द्वितीयश्लोकेऽपि तच्छब्दवाच्यचिदचिद्रूपकृत्स्नजगद्विशेष्यकाच्युतपदार्थप्रकारकबोधपरतया 'तदच्युतः' इति सामानाधिकरण्यनिर्देश कृत्वा 'नास्ति परं ततोऽन्यत्' इत्यनेन जगति यथोक्तलक्षणं तादात्म्यमेव तत्र हेतुरिति दर्शितम् ॥ ४४ ॥ तादात्म्याभेदैक्यादिशब्दानां पर्यायत्वात्तच्छब्दनिर्देश्यसम्बन्धनिष्ठसंसर्गतानिरूपितविषयताप्रयोजकत्वमेव सामानाधिकरण्यं शब्दानामिति हि तदभिप्रायोऽवगम्यते ॥ ४५ ॥ अत्राभिधीयमानो जगतो ब्रह्माभेदो न स्वरूपतो भेदाभावरूपः, जगद्ब्रह्मणोस्स्वरूपतो भेदस्यान्यत्र सुप्रतिष्ठापितत्वात् , स्वरूपतो जडाजडयोरभेदस्यात्यन्तमेवासम्भावितत्वाच्च ॥ ४६ ॥ ब्रह्मेतरवस्तुमात्रप्रतिषेधपरोऽयं 'न यतोऽन्यदस्ति' इति निर्देश इत्यपि न शङ्क्यं,भेदेन निर्दिष्टयोर्जीवात्मपरमात्मनोः प्राक्कृतसामानाधिकरण्यनिर्देशनिर्वाहानौपयिकत्वेन तथाविधप्रतिषेधस्येहोपयोगाभावात् , ब्रह्मेतरस्य वस्तुनः प्रसिद्धत्वे तत्प्रतिषेधायोगात् , अप्रसिद्धत्वेच प्रतियोग्यप्रसिद्ध्या सुतरामेव तत्प्रतिषेधायोगाच्च तथाविधप्रतिषेधस्य प्रमाणभूतशास्त्रवेद्यताया एवासम्भवाच्च ॥ ४७ ॥ अपितु—स्वरूपतो वासुदेवभिन्नं किमपि द्रव्यमपृथक्सिद्धिलक्षणतादात्म्यसम्बन्धावच्छिन्नवासुदेवनिष्ठप्रतियोगिताकभेदवन्नास्तीति तादृशभेदाभावरूपवासुदेवतादात्म्यमेवेह सामानाधिकरण्यनिर्देशनिर्वाहकतयाऽभिधीयते ॥ ४८ ॥ अयमर्थश्च दर्शितद्वितीयश्लोके 'तदच्युतो नास्ति परं ततोऽन्यत्' इत्यत्र स्पष्टमेवावगम्यते, अत्र 'परमन्यत्' इति द्वयोः पदयोस्सत्त्वेन परमित्यस्य स्वरूपतोऽच्युतभिन्नवस्तुपरत्वात् अन्यदित्यस्यापृथक्सिद्धिलक्षणतादात्म्यसम्बन्धावच्छिन्नाच्युतनिष्ठप्रतियोगिताकभेदवत्परत्वाच्च ॥ ४९ ॥ अतस्तदैकार्थ्येन प्रथमश्लोकेऽपि यथोक्तलक्षणभेदप्रतिषेधएव—'स वासुदेवो न यतोऽन्यदस्ति' इत्यनेन विवक्षितः ॥ ५० ॥ तादृशभेदश्च ब्रह्मणि रूपादिगुणेषुच प्रसिद्ध एवेति ब्रह्मेतरचिदचिदात्मकद्रव्येषु तत्प्रतिषेध उपपन्न एव ॥ ५१ ॥ तथाचात्र सामानाधिकरण्यनिर्देशनिर्वाहौपयिकतया दर्शितभेदाभावस्य प्रदर्शनाद्दर्शितभेदाभावपर्यवसन्नं दर्शिततादात्म्यमपि सामानाधिकरण्यनिर्देशनिर्वाहकमेव ॥ ५२ ॥ न च स्वरूपतो भिन्नयोरीदृशाभेदव्यपदेशो लाक्षणिक एव न मुख्य इति वाच्यम्, अहिकुण्डलाधिकरणतृतीयसूत्रभाष्ये 'जीवव-

श्री॥दपृथक्सिद्धविशेषणत्वेनाचिद्वस्तुनो ब्रह्मांशत्वं, विशिष्टवस्त्वैकदेशत्वेनाभेदव्यवहारो मुख्यः, विशेषणविशेष्ययोस्स्वरूपस्वभावभेदेन भेदव्यवहारो मुख्यः' इत्यपृथक्सिद्धविशेषणे स्वरूपैक्यलक्षणतादात्म्यसम्बन्धावच्छिन्नविशेष्यनिष्ठप्रतियोगिताकाभावरूपविशेष्यभेदव्यवहारस्य-अपृथक्सिद्धिलक्षणतादात्म्य-सम्बन्धावच्छिन्नविशेष्यनिष्ठप्रतियोगिताकाभावरूपविशेष्यभेदाभावव्यवहारस्य च द्वयोर्मुख्यतायास्स्पष्टमेव भाषितत्वात्॥५३॥ एव जिज्ञासाधिकरणभाष्ये भेदतन्निषेधश्रुत्यविरोधसमर्थनघट्टे 'कृत्स्नस्य जगतो ब्रह्मकार्यतया तदन्तर्यामिकतयाच तदात्मकत्वेनैक्यात्तत्प्रत्यनीकनानात्वं प्रतिषिध्यते' इत्युक्त्या, तदपृथक्सिद्धिलक्षणं तदात्मकत्वमप्येकत्वरूपमिति तथाविधैकत्वाभावोऽपि तद्वस्तुप्रतियोगिकभेदरूप इति च स्पष्टमुपदर्शितम् ॥ ५४ ॥ एवं तत्रैव पुराणघट्टे 'तदिदं शरीरात्मभावायत्तं तादात्म्यं सामानाधिकरण्येन व्यपदिश्यते ज्योतींषि विष्णुरिति । अत्रास्त्यात्मक नास्त्यात्मकं च जगदन्तर्गतं वस्तु विष्णोः कायतया विष्ण्वात्मकम्' इत्युक्त्या दर्शिततादात्म्यस्यापि सामानाधिकरण्यव्यपदेशनिर्वाहकत्वमभिहितम् ॥ ५५ ॥ एवमशाधिकरणेऽपि जीवस्य ब्रह्मांशत्वसाधने तद्भिन्नत्वतदैक्यनिर्देशयोर्हेतुतयाऽभिधानात्, तद्भाष्ये तदैक्यनिर्देशस्य 'तत्त्वमसि' 'अयमात्मा ब्रह्म' इत्यादिनिर्देशरूपत्वाभिधानात्, एवमुभयव्यपदेशमुख्यत्वसिद्धये 'जीवोऽयं ब्रह्मणोऽशः' इत्यभ्युपगन्तव्य इत्युक्तेश्च ब्रह्मात्मकत्वरूपतदैक्यस्यापि स्वरूपैक्यवत्सामानाधिकरण्यनिर्देशनिर्वाहकत्व सम्भवतीति तादृशसामानाधिकरण्यनिर्देशस्यापि मुख्यत्वमेवेति च दर्शितम्॥५६॥ एव 'तमः परे देव एकीभवति' इति श्रुत्या 'एको घटः' 'एकः पटः' इत्यादिव्यवहारैश्च पृथक्सिद्ध्यनर्हसम्बन्धविशेषस्याप्येकत्वरूपताया अवगमात्, तदैक्यस्यैव तत्सामानाधिकरण्यनिर्देशप्रयोजकत्वाच्च तत्स्वरूपैक्यवत्तदात्मकत्वरूपतदैक्यस्यापि तत्सामानाधिकरण्यनिर्देशनिर्वाहकत्वं दुरपह्नवम् ॥ ५७ ॥ जडाजडयोस्स्वरूपैक्यासम्भवेन 'तमः परे देव एकी भवति' इत्यत्र अनेकावयवसङ्घातात्मकघटपटादिषु स्वरूपैक्या सम्भवेन 'एको घटः' 'एकः पटः' इत्यादिषु च पृथक्सिद्ध्यनर्हसम्बन्धविशेष एव ह्येकशब्देन प्रतिपाद्यते ॥ ५८ ॥ इत्थञ्च—प्रागुदाहृतविष्णुपुराणश्लोकेषु—'ज्ञान स वासुदेवः' 'तदच्युतः' 'ज्योतींषि विष्णुर्भुवनानि विष्णुः' इत्यादिस्थलेषु 'सर्वं खल्विदं ब्रह्म' ॥ छां ॥ ३ ॥ १४ ॥ १ ॥ 'ब्रह्माच नारायणः । शिवश्च नारायणः । शक्रश्च नारायणः । द्यावापृथिव्यौ च नारायणः। कालश्च नारायणः। दिशश्च नारायणः' ना उ । २ । इत्यादिश्रौतनिर्देशस्थलेषु च ज्ञानादिशब्दवाच्यचेतनाचेतननिष्ठविशेष्यतानिरूपितवासुदेवादिशब्दवाच्यपरमात्मनिष्ठस्वान्तर्यामिकत्वलक्षणतादात्म्यसम्बन्धावच्छिन्नप्रकारताशालिबोधपरतयैव सामानाधिकरण्यनिर्देशो निर्वोढुमुचितः, तत्रत्यपदसन्दर्भाणा चेतनाचेतनविशेष्यकबोधजनन एव स्वारसिकत्वात्॥ ५९ ॥ 'अहं स पुरुषोऽस्मि इति प्रकृतस्थलेतु—असधात्वर्थाधेयतायां स्वनिरूपितापृथक्सिद्ध्यवच्छिन्नत्वसम्बन्धेन पुरुषपदार्थपरमात्मनोऽन्वयेऽपि तथाविधाधेयताश्रयत्वस्याहंपदार्थे प्रत्यगात्मनि भानबलेन धर्मिपारतन्त्र्येण पुरुषपदार्थपरमात्मनोऽपि स्वनिरूपितापृथक्सिद्धिलक्षणतादात्म्यसम्बन्धेन तत्र भाननैयत्येन अहंपदपुरुषपदयोस्सामानाधिकरण्यं सम्भवतीति बोध्यम्॥ ६० ॥ अत एव—'अविभागेन दृष्टत्वात्'॥ शा ॥ ४ ॥ ४ ॥ ४ ॥ इत्यधिकरणभाष्ये—'किमयं परं ज्योतिरुपसम्पन्नस्सर्वबन्धविनिर्मुक्तः प्रत्यगात्मा स्वात्मानं परमात्मनः पृथग्भूतमनुभवति, उत तत्प्रकारतया तदविभक्तम्' इति विशयमुपदर्श्यसिद्धान्ते, 'अतोऽविभागेन'अहं ब्रह्मास्मि'इत्येवानुभवति' इति निर्दिशता भाष्यकृताप्यहंपदार्थप्रत्यगात्मनिष्ठविशेष्यतानिरूपिताविभागशब्दितापृथक्सिद्धिलक्षणतादात्म्यसम्बन्धावच्छिन्नब्रह्मपदार्थपरमात्मनिष्ठप्रकारताशालिबोधपरत्वम्-'अहं ब्रह्मास्मि' इति निर्देश-

श्री॥स्योपदर्शितम्॥६१॥अत्र प्रत्यगात्मनि ब्रह्माविभागस्य धर्मिपारतन्त्र्येण भानाभिप्रायेणैवेत्थमुक्तम् , अन्यथा ब्रह्मपदार्थस्यासधात्वर्थ एवान्वयेन ब्रह्माविभागस्य प्रकारविधयावा संसर्गविधयावा प्रत्यगात्मनि भानासम्भवात् ॥ ६२ ॥ अत्राहंपदार्थब्रह्मपदार्थयोरविभागेनानुभवपरताय: 'अह ब्रह्मास्मि' इति सामानाधिकरण्यनिर्देशस्याभिधानेन स्वरूपाभेदलक्षणतादात्म्यवदविभागशब्दितशरीरशरीरिभावलक्षणतादात्म्यस्यापि सामानाधिकरण्यनिर्वाहकत्वं भाष्यकारैस्स्पष्टमभिहितं भवति॥ ६३ ॥ न च भिन्नप्रवृत्तिनिमित्ताना शब्दानामेकस्मिन्नर्थे वृत्तिस्सामानाधिकरण्यम्' इति शाब्दिकोक्तसामानाधिकरण्यं स्वप्रयोज्यविषयतासंबन्धेन शब्दानामर्थलक्षणैकाधिकरणवृत्तित्वरूपं ह्यवगम्यते 'अहं स पुरुषोऽस्मि' इत्यत्र पुरुषपदार्थस्य परमात्मनः स्वान्तर्यामिकत्वलक्षणतादात्म्यसम्बन्धेनाहंपदार्थे जीवात्मन्यन्वयस्वीकारेऽप्यहपदपुरुषपदयोस्तादृशं सामानाधिकरण्य कथ सम्भवति? तत्प्रयोज्यविशेष्यताप्रकारतयोरेकाधिकरणनिष्ठत्वाभावादिति वाच्य; दर्शितसामानाधिकरण्यलक्षणे स्वप्रयोज्यविषयतानिरूपितसंसर्गतावत्त्वसम्बन्धेन समानविभक्त्यर्थैकत्वरूपैकार्थवृत्तित्वस्य स्वप्रयोज्यविषयतानिरूपितत्वसम्बन्धेनैकत्वनिष्ठसंसर्गतालक्षणैकाधिकरणवृत्तित्वपर्यवसन्नस्यैवान्ततस्सामानाधिकरण्यशब्देन विवक्षणीयत्वात् , स्वान्तर्यामिकत्वादिलक्षणतादात्म्यादिपृथक्सिद्ध्यनर्हसम्बन्धविशेषाणा सर्वेषामेवैकत्वरूपताया दर्शितत्वाच्चात्राहंपदपुरुषपदयोर्यथोक्तलक्षणसामानाधिकरण्यस्याव्याहतत्वात् , अन्यादृशसामानाधिकरण्यस्यानेकदोषसम्भवेनेह विवक्षणासम्भवाच्च ॥ ६४ ॥

तथाहि—स्वप्रयोज्यविषयतासम्बन्धेनार्थलक्षणैकाधिकरणवृत्तित्व तावन्नेह विवक्षितुं शक्यं 'सम्पन्नेन चैत्रेणानाहूतोऽपि मैत्रस्तस्य प्रीतिसम्पादनाय सततं तस्यानुपदं गच्छति'इत्यत्र तृतीयान्तसम्पन्नपदचैत्रपदयोष्षष्ठ्यन्ततत्पदस्यच सामानाधिकरण्यव्यवहारप्रसङ्गात्॥ ६५॥ एव स्वनिरूपितत्वस्वसामानाधिकरण्योभयसम्बन्धेन तच्छब्दप्रयोज्यविषयताविशिष्टविषयताप्रयोजकत्वमेतच्छब्दस्य तच्छब्देन सामानाधिकरण्यमिति पर्यवसानकरणेऽपि 'घटाभावे घटाभावः' 'सर्वस्मिन्नभिधेये प्रमेयत्वम्' इत्यादिष्वतिप्रसङ्गः, 'शङ्खं पीतं जानाति' इत्यादावप्रसङ्गश्च भवतः, प्रथमस्थले धर्मिपारतन्त्र्येणाधेयतासम्बन्धेन घटाभावस्य घटाभावे प्रकारतया भानेन द्वितीयस्थलेऽभिधेयपदार्थस्य प्रमेयत्वपदार्थे तथा भानेनच सप्तम्यन्तप्रथमान्तपदप्रयोज्यप्रकारताविशेष्यतयोरेकनिष्ठत्वनिरूप्यनिरूपकभावोभयसत्त्वात् , तृतीयस्थले शङ्खपदपीतपदप्रयोज्यविषयतयोरेकनिष्ठत्वासम्भवाच्च ॥ ६६ ॥ तस्माद्यथोक्तरीत्यैव सामानाधिकरण्यलक्षणपर्यवसानं कार्यमिति न कश्चिद्दोषः ॥ ६७ ॥ नचैवमपि, 'शङ्खं पीतं जानाति' इत्यत्र शङ्खपीतशब्दयोस्सामानाधिकरण्यलक्षणस्याप्रसङ्गो दुर्वारः, तत्र पीतपदार्थस्य धर्मिपारतन्त्र्येण तादात्म्येन शङ्खपदार्थे भाने वाक्यस्याप्रामाण्यप्रसङ्गेन तथाभानासम्भवादिति वाच्यम् ; स्वरूपैक्यलक्षणतादात्म्येन तस्य तत्र तथाभानासम्भवेऽपि तथाविधतादात्म्यसम्बन्धावच्छिन्नप्रकारतानिरूपकत्वावच्छिन्ननिरूपकताकविशेष्यतावत्त्वसम्बन्धेन तथाभानसम्भवात्तादृशविशेष्यतावत्त्वसम्बन्धस्याप्येकत्वादिरूपत्वानपायाच्च ॥ ६८ ॥ एकत्वतादात्म्याभेदादिशब्दाना पर्यायत्वात्पृथक्सिद्ध्यनर्हसम्बन्धविशेषाणां सर्वेषामप्यभेदरूपताया दर्शितत्वाच्च समानाधिकरणवाक्यस्थले नामार्थयोरभेद एव संसर्ग इति व्युत्पत्तेरपि न विरोधः ॥ ६९ ॥ एतेन—अपृथक्सिद्धेरभेदातिरिक्तत्वेऽपि समानाधिकरणवाक्यस्थले तत्सम्बन्धेन नामार्थयोरन्वयं स्वीकृत्य मुख्यत्वनिर्वाहे-'अग्निर्माणवकः' इत्यादिसर्वसम्प्रतिपन्नगौणव्यवहाराणामपि मुख्यत्वापत्तिर्दुर्वारा ; तत्रापि सादृश्यसम्बन्धेन नामार्थयोरन्वयस्वीकारसम्भवादिति शङ्कापि दूरोत्सारिता ; अपृथक्सिद्धेरभेदरूपतासम्भवात् , भेदगर्भस्य सादृश्यस्य तथा-

श्री॥सम्भवाभिप्रायेणवा सर्वविधकर्मसद्भावद्विषयत्ववदेकशब्दप्रवृत्तिनिमित्तानां नानाविधत्वेऽप्यावृ·त्यावा एकशब्दप्रवृत्तिनिमित्तत्वेन क्रोडीकारेणवा सामानाधिकरण्यलक्षणेऽपि तादात्म्यादिशब्दाभिलप्यसर्वविधैकत्वपदार्थप्रवेशसम्भवेन क्षत्यभावात्॥८२ ॥ नचेदृशरीत्यैव तत्त्वमस्यादिसामानाधिकरण्यनिर्देशनिर्वाहसम्भवे किमर्थं शरीरवाचकानां शरीरिणि शक्तिस्स्वीकार्या, किमर्थं वा तत्साधनप्रयासो भाष्यकारैर्बहुधा कृत इति वाच्य, ब्रह्मचेतनाचेतनवाचकशब्दानां सामानाधिकरण्यस्य तादृशशक्तिं विनैव निर्वाहसम्भवेऽपि 'अहम्मनुरभवं सूर्यश्च' ॥ बृ ॥ ३ ॥ ४ ॥ १० ॥ 'अहं सर्वम्' ॥ वि ॥ १ ॥ १९ ॥ ८५ ॥ इत्यादीनां परस्परविभिन्नचेतनाचेतनवाचिशब्दसामानाधिकरण्यनिर्देशानां 'तत्तेज ऐक्षत' 'ता आप ऐक्षन्त' 'तं पृथिव्यब्रवीत्' इत्यादिनिर्देशानां देवतिर्यङ्मनुष्यादिशब्दैश्चेतननिर्देशानाञ्च निर्वाहासम्भवेन शरीरवाचकशब्दानां शरीरिणि शक्तेरावश्यकत्वात् ॥ ८३ ॥ अत्र प्रथमनिर्देशेषु परस्परविभिन्नयोश्चेतनाचेतनयोश्शरीरशरीरिभावस्य स्वरूपाभेदस्य वा विरहात्तद्वाचिनोश्शब्दयोस्तत्तच्चेतनाचेतनशरीरकपरमात्मपरत्वमाश्रित्यैव सामानाधिकरण्यं निर्वाह्यम् ॥ ८४ ॥ द्वितीयतृतीयनिर्देशेषु स्वयं विशेष्यपरतयैव निर्दिष्टानां तेजआदिशब्दाना देवादिशब्दानां च तथाविधशक्तिमन्तरेण निर्वाहो न सम्भवति ॥ ८५ ॥ एवं नामरूपव्याकरणश्रुतिवलेन सिध्यन्त्याश्शरीरवाचकानां शरीरिणि शक्तेर्न कथञ्चिदप्यपह्नवः कर्तुं शक्यः ॥ ८६ ॥ नचैवं प्रमाणबलात्प्रयोगप्राचुर्यबलाच्चावर्जनीयतयाऽवश्यमङ्गीकर्तव्ययाऽनन्यथासिद्धया शरीरवाचकाना शरीरिणि शक्त्यैवात्रापि निर्वाहस्सम्भवति, अहंशब्दस्य स्वात्मशरीरकपरमात्मपरत्वं पुरुषशब्दस्य यथाश्रुतपरत्वञ्चाश्रित्य स्वरूपाभेदलक्षणैक्यसम्बन्धेनैव पुरुषशब्दार्थस्याहंशब्दार्थेऽन्वयस्वीकारसम्भवात् ; कृतश्चेदृश एव निर्वाहस्तत्त्वमस्यादिवाक्येषु भाष्यकारैरसकृत् ; एवं सति किमर्थमिह पुरुषशब्दस्य परमपुरुषात्मके शक्तिंवा स्वार्थकेवलपरमात्मनस्स्वान्तर्यामिकत्वलक्षणतादात्म्यसम्बन्धेनाहंपदार्थे जीवात्मन्यन्वयबोधौपयिकशक्तिंवा स्वीकृत्य प्रकारान्तरेण बोधवर्णनप्रयासादरणमिति वाच्यम्, स्वात्मनस्सर्वप्रकारपरमात्मनियाम्यत्वस्यैकान्तिकात्यन्तिकभक्तत्वपर्यवसायिनो भगवद्दिव्यमङ्गलविग्रहदर्शनाधिकारप्रयोजकतया प्राधान्येन विधेयतया ज्ञापनस्येहाभिमतत्वेनाहंपदस्य जीवशरीरकपरमात्मपरत्वस्वीकारे विशेष्यतावच्छेदकतयैव तद्भानसिद्ध्या तथाविधतद्भानस्य प्राधान्येन विधेयतया यथोक्तलक्षणाधिकारप्रयोजकतया तज्ज्ञापनरूपत्वासिद्धेः, स्वात्मशरीरकपरमात्मन्यादित्यमण्डलान्तर्वर्तिविलक्षणदिव्यविग्रहादिविशिष्टपुरुषविशेषाभिन्नत्वस्यैव प्राधान्येन विधेयतया भानेन तस्य यथोक्तलक्षणाधिकाराप्रयोजकतया तज्ज्ञापनस्य प्रकृतानुपकारकत्वाच्चाहंपदस्य केवलजीवात्मपरत्वमाश्रित्य तद्विशेष्यकसर्वप्रकारपरमात्मनियाम्यत्वविधेयकानुसन्धानपर्यवसायिनस्स्वाधिकारज्ञापनोपकारक बोधस्यैवेहाश्रयणीयत्वेन तदर्थमुक्तप्रयासादरणस्यावश्यकत्वात्॥ ८७॥ चिदचिद्विशेष्यकसर्वप्रकारपरमात्मनियाम्यत्वविधेयकबोधस्यावश्यकत्वमभिसन्धाय चिदचिद्वाचकशब्दस्य परमात्मपर्यन्तवाचित्वस्वीकारे तादृशबोधानिर्वाहाभिप्रायेणैवच प्रागुदाहृतेषु केषुचित् स्थलविशेषेषु चिदचिद्वाचिशब्दानां केवलचेतनाचेतनवाचित्वं भगवद्वाचिशब्दाना भगवदात्मकपरत्वञ्चाश्रित्य सामानाधिकरण्योपपादनं भाष्यकारैः कृतम् ॥ ८८ ॥ 'तत्त्वमसि' इत्यत्राप्युक्तरीत्या त्वंपदस्य केवलजीवात्मपरत्वमाश्रित्यैव निर्वाहसम्भवेऽपि तत्प्रकरणे पूर्वमेकविज्ञानेन सर्वविज्ञानं प्रतिज्ञाय तदुपपादनाय कार्यकारणयोरैक्यं सत्स्यैव बहुभवनसङ्कल्पपूर्वकं परस्यैव ब्रह्मणो बहुभावञ्चाभिधाय तदीयबहुभावोपपादनाय स्वात्मविशिष्टप्रत्यगात्मनाऽचिदन्तःप्रवेशपूर्वकं परेण ब्रह्मणा स्वात्मन एव सर्वनामरूपकरणञ्चाभिधाय तदुपपादनस्यैव श्रुत्या प्रक्रान्तत्वादुपसंहारस्य तदानुगुण्यसिद्धये त्वंशब्दस्य जीवशरीरकपरमात्मपरत्वमाश्रित्य सामानाधिकरण्योपपादनं भाष्यकारैः कृतम् ॥ ८९ ॥

श्री॥त्वशब्दस्य जीवात्ममात्रपरत्वं स्वीकृत्यतत्पदस्य ब्रह्मात्मकपरत्वं स्वीकृत्यवा ब्रह्ममात्रपरत्वमाश्रित्य यथोक्तलक्षणतादात्म्यसम्बन्धेन तत्पदार्थब्रह्मणस्त्वंपदार्थेऽन्वयं स्वीकृत्यवा सामानाधिकरण्योपपादने ह्युपक्रमानुगुण्यमुपसंहारस्य न सम्भवति, कार्यकारणयोस्स्वरूपैक्येन कारणविज्ञानेन कार्यविज्ञानसम्भवमभिप्रेत्यैव तदनुगुणदृष्टान्तप्रदर्शनपूर्वकं कारणभूतैकब्रह्मविज्ञानेन तत्कार्यकृत्स्नवस्तुविज्ञानस्यैव प्रतिपिपादयिषितत्वेन कार्यरूपत्वं पदार्थस्य तत्पदार्थब्रह्मरूपकारणस्वरूपैक्यप्रतिपादनं विना तदसिद्धेः,जीवमात्रस्य त्वंपदार्थत्वे तस्य ब्रह्मस्वरूपैक्याभावेन तत्त्वंपदार्थयोरिह स्वरूपैक्यप्रतिपादनायोगाच्च ॥९०॥ तदिदं सर्वमभिप्रेत्योक्तं जिज्ञासाधिकरणभाष्ये सङ्ग्रहेण सिद्धान्तोपन्यासघट्टे भाष्यकारैः—'एवं सर्वावस्थावस्थितचिदचिद्वस्तुशरीरतया तत्प्रकारः परमपुरुष एव कार्यावस्थकारणावस्थजगद्रूपेणावस्थित इतीममर्थं ज्ञापयितुं काश्चन श्रुतयः कार्यावस्थं कारणावस्थञ्च जगत्स एवेत्याहुः—'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' 'तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजत' ॥ छां ॥ ६ ॥ २ ॥ ३ ॥ इत्यारभ्य 'सन्मूलास्सोम्येमास्सर्वाः प्रजास्सदायतनास्सत्प्रतिष्ठाः । ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो' ॥ छां ॥ ६ ॥ ८ ॥ ७ ॥ इति ॥ ९१ ॥ अत्र हि भाष्ये कार्यावस्थकारणावस्थजगद्रूपेणावस्थितपरमपुरुषपरतामस्याः श्रुतेरभिदधानैर्भाष्यकारैरुपक्रमानुगुण्याय कार्यावस्थाचिद्विशिष्टचिच्छरीरकब्रह्मपरत्वमेव त्वंपदस्य वक्तव्यमिति स्फुटीकृतम् ॥ ९२ ॥ तथाच 'तत्त्वमसि' इति श्रुतौ तत्रत्यप्रकरणानुगुण्येन त्वंपदस्याचिद्विशिष्टजीवशरीरकपरमात्मपरत्वेऽपि प्रकृतस्थले-'अहं स पुरुषोऽस्मि' इत्यत्राहंपदस्य जीवात्ममात्रपरत्वमेव स्वीकृत्य पुरुषपदस्य परमपुरुषात्मकपरत्वंवा यथोक्तलक्षणतादात्म्यसम्बन्धेन पुरुषपदार्थपरमात्मनस्तत्रान्वयंवाऽऽश्रित्यैव निर्वाहः कार्यः, तथा सत्येव यथोक्तलक्षणस्वाधिकारविशेषज्ञापनसिद्धेरिति बोध्यम् ॥ ९३ ॥

एतेन-अहंशब्दोऽत्रजीवद्वारा परमात्मपर्यन्त इत्यहंशब्दस्य परमात्मपर्यन्तपरत्वाभिधानं, तथात्वास्वीकारे 'ब्रह्मात्मकोऽहमस्मि' इति परविद्याङ्गभूतस्वात्मानुसन्धानपरत्वेऽपि तच्छब्देन तादधीन्यादिकं लक्षणीयं स्यादित्यभिधानञ्च वेदान्ताचार्यतदनुयायिनामयुक्तमेवेति सिद्धम्, अहंशब्दस्य जीवशरीरकपरमात्मपरत्वाश्रयणे प्रकरणविवक्षितार्थस्य प्राधान्येन विधेयतया बोधनासिद्धेः प्रागुपदर्शितत्वात्, स्वस्मिन् परमात्मशरीरभावस्य सर्वप्रकारपरमात्मनियाम्यत्वादिलक्षणविवक्षितार्थरूपस्य पुरुषशब्देन ब्रह्मात्मकपरेण यथोक्तरीत्या शक्त्यैव बोधनसिद्धेस्तत्र लक्षणाविरहस्यच प्रागुपपादितत्वात्, तत्र लक्षणाप्रसङ्गाभिधानस्य गीताभाष्यतात्पर्यचन्द्रिकायां-'क्षेत्रज्ञं चापि मां विद्धि' इत्यत्र 'माम्'इत्यस्य मदात्मकमित्यर्थपरत्वमाश्रित्य भाष्यकारैर्व्याख्यातस्य सामानाधिकरण्यनिर्देशस्य मुख्यताप्रतिपादकस्वोक्तेरेव विरुद्धत्वाच्च॥ ९४ ॥ अत्रत्यपुरुषशब्दो न स्वात्मरूपजीवपरो भवितुमर्हति, विप्रकृष्टवाच्यदश्शब्देन सूर्यमण्डलान्तर्वर्तिपुरुषपरामर्शात्, 'हिरण्मयेन' इत्यादिमन्त्रे माध्यन्दिनपाठे 'योऽसावादित्ये पुरुषस्सोऽसावहम्' इति सूर्यमण्डलान्तर्वर्तिपुरुषपरतायाः स्पष्टत्वेन तदैककण्ठ्यनात्रापि तादृशपुरुषपरताया दुर्वारत्वाच्च ॥ ९५ ॥ नाप्यादित्यसूर्यादिशब्दाभिलप्यजीवविशेषपरः, 'यत्ते रूपं कल्याणतमं तत्ते पश्यामि' इत्यनेन-'यएषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते । हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात्सर्व एव सुवर्णः । तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी तस्योदितिनाम । स एष सर्वेभ्यः पाप्मभ्य उदितः' ॥ छां ॥ १ ॥ ६ ॥ ६ ॥ ७ ॥ इति श्रुत्युक्तविलक्षणरूपवत्त्वज्ञापनेन तादृशरूपवत्पुरुषविशेषपरतायाः प्रत्यभिज्ञाप्यमानत्वात्, तादृशरूपवत्पुरुषस्यच पुण्डरीकाक्षत्वापद्-

**वायुरनिलममृतमथेदं भस्मान्तँ शरीरम् ।**
**ओं क्रतो स्मर कृतँ स्मर क्रतो स्मर कृतँ स्मर ॥** १७

**वे**॥अनन्तरं तु परिशुद्धात्मस्वरूपमुच्यते—**वायुरनिलममृतम्**—इति।विद्याकर्मानुसारेण तत्रतत्र गन्तृत्वात्**वायुः**।निलयनरहितत्वात् क्वचिदपि व्यवस्थितत्वाभावाच्च **अनिलम्**।**अमृतं**—म्रियमाणेऽपि देहसन्ताने स्वयममृतम् । इदं विजरत्वादीनामप्युपलक्षणम्, परिशुद्धजीवविषये प्रजापतिवाक्ये 'विजरो विमृत्युर्विशोकः' इत्यादिसहपाठात् । अत्र 'वायुश्चान्तरिक्षं चैतदमृतम्' इत्यादिपरामर्शाद्वाय्वादि-

---

**कू** ॥ एवं परावरतत्त्वविवेकपरमनिश्श्रेयससाधनभूतसाङ्गभक्तियोगं तन्निष्ठस्यानुसन्धेयमन्त्रद्वयं चोपदिश्य इदानीं भक्तियोगे ज्ञानशक्त्यादिशून्यतया शरणागतिमवलम्बमानानां तदनुष्ठानमन्त्रावुपदिशति । यद्यप्यागमे आचार्यैरिमौ शरणागतिमन्त्राविति रहस्यत्वात् कण्ठरवेण नाभिहितौ ; तथापि प्राज्ञानामर्थसामर्थ्याद्यथा तत्परत्वावगमस्सुशकः, तथा तयोश्श्लोकयोरर्थवर्णनं कृतम् । अभाषिचेत्थमन्ते 'व्यक्ताव्यक्ते वाजिनां संहितान्ते व्याख्यामित्थं वाजिवक्त्रप्रसादत् । वैश्वामित्रो विश्वमित्रं व्यतानीद्विद्वच्छात्रप्रीतये वेङ्कटेशः' इति । अत्र 'विद्वच्छात्रप्रीतये' इत्यनेन स्वप्रबन्धस्य निगूढाभिप्रायत्वं व्यञ्जितम् । एवमाचार्याभिप्रायविषयत्वाच्छरणागतिपरतया मन्त्रद्वयं व्याख्यास्यते । तत्र 'वायुरनिलम्'

---

**श्री**॥तपाप्मत्वादिधर्मैः परमपुरुषरूपतायास्स्पष्टत्वात्, 'अन्तस्तद्धर्मोपदेशात्'॥ १ ॥ १ ॥ २१ ॥इत्यधिकरणे सूत्रकारेण तस्य जगत्कारणपरब्रह्मलक्षणपरमपुरुषरूपतायाः स्थापितत्वात्, 'हिरण्मयेन' इत्यादिमन्त्रे माध्यन्दिनपाठे 'ओं खं ब्रह्म' इति वाक्यशेषेणैतत्प्रकरणविवक्षितादित्यमण्डलान्तर्वर्तिपुरुषस्याकाशवत्सर्वव्यापिप्रणववाच्यपरब्रह्मरूपतायास्स्पष्टमेव श्रवणेन तदैककण्ठ्येनापि तत्सिद्धेर्दुर्वारत्वाच्च ॥ ९६ ॥ अतोऽत्रत्यपुरुषशब्दः परमपुरुषपर एव ॥ ९७ ॥ तस्माद्यथोक्तरीत्या 'अहं स पुरुषोऽस्मि' इत्यत्राहंपदस्य केवलजीवात्मपरत्वमेवाश्रित्य पुरुषपदस्य. पुरुषात्मकपरत्वं दर्शितलक्षणतादात्म्यविशेषरूपैकत्वसम्बन्धेन पुरुषपदार्थपरमात्मनोऽहंपदार्थप्रत्यगात्मन्यन्वयंवा स्वीकृत्याहंपदार्थप्रत्यगात्मविशेष्यकस्य सर्वप्रकारपरमात्मनियाम्यत्वादिलक्षणशरीरत्वविधेयकस्य तत्सम्बन्धेन परामात्मविधेयकस्यवा बोधस्यैव कल्याणतमदिव्यरूपसाक्षात्काराधिकारज्ञापनपर्यवसायिनस्स्वीकार आवश्यक इत्यलं विस्तरेण ॥ ९८ ॥ इति षोडशमन्त्रव्याख्यानम् ॥ १६ ॥

अयम्मन्त्रः काण्वैस्सप्तदशमन्त्रतया पठ्यते ॥ १ ॥ माध्यन्दिनैस्तु पञ्चदशमन्त्रतया । उत्तरार्धे 'ओं क्रतो स्मर क्लिबे स्मर कृतँ स्मर' इति भेदेनच पठ्यते ॥ २ ॥ अथोपासकस्स्वोपासनस्य स्वरूपानुगुणैश्वर्यकैवल्यलक्षणक्षुद्रपुरुषार्थान्तरपर्यवसानप्रसङ्गपरिजिहीर्षया तत्परिहरणीयत्वविज्ञापनपूर्वकं स्वरूपानुगुणगुणानुभवकैङ्कर्यलक्षणभगवत्प्राप्तिरूपपरमपुरुषार्थप्रदानं प्रार्थयते द्वाभ्याम्मन्त्राभ्यां स्वोपास्यं परमपुरुषम् ॥ ३ ॥ तत्राप्यैश्वर्यपुरुषार्थपर्यवसानेऽपि तस्य नश्वरतया पश्चादपि भगवत्प्राप्तिलक्षणपरमपुरुषार्थसम्पादनयोग्यतायाः अविलयात्, कैवल्यपुरुषार्थपर्यवसानेतु तस्य नित्यतया पश्चात्तादृशयोग्यतायाः एव विलयाच्चैश्वर्यपुरुषार्थपर्यवसानादपि कैवल्यपुरुषार्थपर्यवसानस्यातिक्रूरतामभिसन्धाय प्रथममेव तत्परिहारं प्रार्थयते —**वायुरि**त्यादिना मन्त्रेण ॥ ४ ॥ अत एव हि भट्टनाथदिव्यसूरिणा स्वप्रबन्धप्रथमश्रीसूक्ते चतुर्थगाथायां कैवल्यार्थिनामीदृशदुर्गत्यतिशयानुसन्धानेनैवैश्वर्यार्थिभ्यः पूर्वमाह्वानं हितोपदेशाय कृतमवगम्यते ॥ ५ ॥ अत एवच श्रीपराङ्कुशदिव्यसूरिणापि श्रीमुखसूक्ताख्यस्वप्रबन्ध-

वे॥शब्दाना भूतद्वितीयविषयत्वं न शङ्कनीयम् , पूर्वापराभ्यामसङ्गतेः । यद्यप्यमीषा परमात्मविषयत्वं विशिष्टवृत्त्या योगतो वा युज्यते, तथापि वरमिह नश्वरस्य देहस्यानन्तर वचनात्तद्व्यावृत्तप्रत्यगात्मपरत्व , प्राणविषयत्वेऽप्यत्र मन्दं प्रयोजनम् । श्वेताश्वतरीयाश्च भोग्यभोक्तृनियन्तॄणा विवेचने भोक्तृशब्दविवक्षितप्रत्यगात्मानममृतशब्देनामनन्ति 'क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव

---

कू॥इति प्रथमश्लोकः पूर्वखण्डसमानार्थकः।'अग्ने नय' इत्यादिश्चापरश्लोक उत्तरखण्डसमानार्थकः।तथाच 'प्राप्यस्य ब्रह्मणो रूप प्राप्तुश्च प्रत्यगात्मनः । प्राप्त्युपायं फलं प्राप्तेस्तथा प्राप्तिविरोधि च' इत्येवमाद्याः पूर्वोत्तरखण्डयोर्विशोधिता ये पदार्थाः, ये च वाक्यार्थभेदाः, ते सर्वेऽपीह पूर्वोत्तरयोः श्लोकयोरनुसन्धेयाः । 'सर्वोपायविनिर्मुक्तं क्षेत्रज्ञं ब्रह्मणि न्यसेत् । एतज्ज्ञान च योगश्च शेषोऽन्यो ग्रन्थविस्तरः' इत्यादिशास्त्रैः प्रोक्षणादिभिस्समिदादिकमिव परिशुद्धस्वस्वरूपयाथात्म्यज्ञानेन संस्कृत्यैवात्महविस्समर्पणीयमित्युक्तत्वादिहापि शरीरेन्द्रियादिभ्यो विविक्तं स्वात्मानं प्रथमं विशोध्य ब्रह्मणि समर्प्य स्वाधिकारानुगुणमर्थयते-**वायुरिति** । 'भोक्ता भोग्यं प्रेरितारञ्च मत्वा' इत्यादिश्रुत्यन्तरप्रसि-

---

श्री॥प्रथमकाण्डद्वितीयश्रीमुखसूक्ते पञ्चमगाथाया'प्रकृतिप्रत्यासत्तिनिवृत्तौ प्राप्त एव भवति मोक्षं चेतनः। तावन्मात्रापेक्षाया तस्य कैवल्यपुरुषार्थ एव पर्यवसानं भवति । तत्प्रसङ्गं निर्धूय स्वरूपानुगुणपरमपुरुषार्थप्रेप्सायान्तु प्रथममेव तदेकयोग्यतया स्वात्मानं निवेद्य भगवन्तं प्रपद्येत'इत्युक्तम् ॥६॥अत्र कैवल्यपुरुषार्थपर्यवसानात्प्रागेव स्वापेक्षानिवेदनपूर्वकं भगवत्प्रपदनकर्तव्यताभिधानं कैवल्यपुरुषार्थस्य नित्यत्वेन पश्चात्परमपुरुषार्थप्राप्तियोग्यताविलयसम्भवाभिप्रायेणेति स्पष्टम् ॥ ७ ॥ यद्यपि प्राग्द्वादशे मन्त्रे कैवल्यार्थ्यपेक्षया संभूत्युपासकत्वेनाभिहितैश्वर्यार्थिना भूयोन्धतमसप्रवेशाभिधानेनापकृष्टत्वमेव प्रतिपन्नम्, तथापि कैवल्यपुरुषार्थादल्पत्वास्थिरत्वाभ्यामैश्वर्यपुरुषार्थस्यापकृष्टत्वाभिप्रायेण तदुक्तम् ; इह तु कैवल्यपुरुषार्थस्य नित्यत्वेनैश्वर्यपुरुषार्थापेक्षया भगवत्प्राप्तिलक्षणपरमपुरुषार्थप्रतिबन्धकतातिशयेन क्रौर्यं विवक्षितमिति न विरोध इत्यवधेयम् ॥ ८ ॥

अस्य मन्त्रस्य पदविवरणं —**वायुः**-प्राणवायुसहचारी प्रत्यगात्मा-'प्राणो वा आशाया भूयान्'॥ छां ॥ ७ ॥ १५ ॥ १ ॥ 'प्राणा वै सत्यम्' ॥ बृ ॥ ४ ॥ ३ ॥ ६ ॥ इत्यादिषु प्राणशब्देनेवात्रापि वायुशब्देन प्राणवायुसहचरितः प्रत्यगात्मैव विवक्षितः । यद्वा 'वा गतिगन्धनयोः' इति गत्यर्थकवातिधातुनिष्पन्नोऽयं वायुशब्दः वाति गच्छतीति वायुरिति व्युत्पत्त्या विद्याकर्मानुसारेण तत्रतत्र गन्तृस्वरूपेण प्रवृत्तिनिमित्तेन प्रत्यगात्मपरः, न तु भूतद्वितीयपरः। **अनिलं**—न विद्यते - इला यस्य तत् अनिलम् , इला पृथिवी 'पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति'॥ छां ॥५॥ ८ ॥ ३ ॥ ९ ॥ १॥ इत्यत्र यथाऽप्छब्द एवापृथक्सिद्धतया भूतान्तरसम्मिश्रत्वेऽपि जलभागभूयस्तया जलवाचकनिर्देश्यभूतसूक्ष्मपञ्चकपरः - तथैवात्रेलाशब्दोऽपि अपृथक्सिद्धतया भूतान्तरसंमिश्रत्वेऽपि पार्थिवभागभूयस्तया पृथिवीवाचकनिर्देश्यभूतसूक्ष्मपञ्चकपरः ; तथाचोज्झितशरीरमित्यर्थः । यद्वा प्रागुक्तरीत्या वायुशब्दवत् 'इल स्वप्नक्षेपणयोः'इति निद्रार्थकेलतिधातुनिष्पन्न इलाशब्दोऽपि-इलन्ति स्वपन्त्यनेति व्युत्पत्त्या यौगिकस्सन् प्रत्यगात्ममोहकारणत्वरूपेण प्रवृत्तिनिमित्तेन प्रकृतिपर एव 'अनीशया शोचति मुह्यमानः' ॥ मुं ॥ ३ ॥१ ॥ २ ॥ 'अजो ह्येको जुषमाणोऽनुशेते'॥ तै॥६ ॥ १० ॥ ५ ॥ श्वे ॥ ४ ॥ ५ ॥ इत्यादिश्रुतिभिः प्रत्यगात्मव्यामोहकारणत्व प्रकृतेः प्रसिद्धम् । तथाचोज्झितप्रकृतिसम्बन्धमि-

वे॥एकः' इति, 'क्षरं त्वविद्या ह्यमृतं तु विद्या विद्याविद्ये ईशते यस्तु सोऽन्यः' इति च। एवं प्रत्यगात्मस्वरूपस्य 'न जायते म्रियते वा विपश्चित्' इत्यादिप्रसिद्धममृतत्वमभिधाय क्षेत्रज्ञशरीरस्य मृतत्वमवश्यं भावीत्याह—**अथेदं भस्मान्तं शरीर**मिति । प्रकृतादर्थादर्थान्तरविवक्षयात्राथशब्दः । आत्मोत्क्रमणानन्तर्यार्थो वा । कर्मवश्यकात्स्न्र्यपरो वा । तथा च स्मर्यते 'गङ्गायां सिकताधारा यथा

---

कू॥द्बश्चिदचिदीश्वरतत्त्वक्रम इहापि द्रष्टव्यः।**वायुः**—विद्याकर्मानुगुणभगवत्सङ्कल्पवशेन तत्रतत्र गन्तृत्वाद्वायुः । अनेन जीवस्याणुपरिमाणत्व परमात्माधीनत्वं च सिद्ध्यति । 'वा गतिगन्धनयोः' इति धातुः।निलयनरहितत्वात्क्वचिदपि व्यवस्थितत्वाभावाच्च-**अनिलम्**।**अमृतं**-म्रियमाणेऽपि देहसन्तानेस्वयममृतं स्वरूपतो धर्मतश्चाविनाशीत्यर्थः । 'अविनाशी वा अरेऽयमात्मा अनुच्छित्तिधर्मा' 'न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते' न विद्यते उच्छित्तिः विनाशो यस्य सः अनुच्छित्तिः नित्य इत्यर्थः । अनुच्छित्तिर्धर्मो यस्यासावनुच्छित्तिधर्मेति पुनर्बहुव्रीहिः । नित्यज्ञानवानिति भावः । आहुश्च यामुनाचार्याः —'तदेवं चित्स्वभावस्य पुसः स्वाभाविकी चितिः । तत्तत्पदार्थसंसर्गात्तत्तद्वित्तित्वमश्नुते' इति । इदममृतत्वमपहतपाप्मत्वादीनामप्युपलक्षणम् , परिशुद्धजीवविषये प्रजापतिवाक्ये 'य आत्मापहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासस्सत्यकामस्सत्यसङ्कल्पः' इति पाठात् । 'अनिलममृतम्' इति पदद्वयमपि पुल्लिङ्गत्वेन विपरिणेयम् ,वायुरिति पुल्लिङ्गत्वेनोपक्रमात् । अत्र 'वायुश्चा-

---

श्री॥त्यर्थः।सर्वथा विद्याबलान्निश्शेषनिवृत्तप्रकृतिसम्बन्धमिति यावत्।अत एव-**अमृतं**—मृतं न भवतीत्यमृतम् । यद्वा मृतशब्दो भावक्तप्रत्ययान्तः ; मृत मरणम् ; तद्रहितं । मरणवाचिमृतशब्दोऽत्र तत्सहचरितपाप्मजराशोकादिसर्वविकारोपलक्षकः , 'य आत्मापहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः'॥ छा ॥ ८ ॥ ७ ॥ १॥इति प्रजापतिवाक्ये प्रकृतिसम्बन्धनिबन्धनपाप्मादिसर्वदोषविनिर्मुक्ततायाएव प्रतिपन्नत्वात् । तथा च प्रकृतिसम्बद्धः प्रत्यगात्मा विद्यामाहात्म्यान्निश्शेषनिवृत्तप्रकृतिसम्बन्ध ततएव हेतोस्तदधीनमरणादिसर्वविकाररहितं विशुद्धं वस्तु, भवतीति नात्र संशय इत्यर्थः । प्रकृतिविनिर्मुक्तविशुद्धप्रत्यगात्मस्वरूपस्य स्त्रीत्वपुंस्त्वादिलिङ्गव्यपदेशानर्हवस्तुत्वाभिप्रायेण 'सामान्ये नपुंसकम्' इत्यनुशासनानुरोधेन नपुंसकलिङ्गशब्देन निर्देशः । **अथ**.- इत्थं विद्याबलादात्मनोनिवृत्तप्रकृतिसम्बन्धशुद्धभावप्राप्त्यनन्तरम्।**इदं**-प्राकृतं शरीर।**भस्मान्तं** भस्मैवान्तो यस्य तथाभूतं भवति, निश्शेषं विनष्टं भवति । न पुनरित ऊर्ध्वमस्यात्मनोऽभिमतकार्यकरणोपयोगितया प्राकृतशरीरानुवृत्तिस्संभावितेति यावत् । इत्थमिह प्राकृतशरीरस्य निश्शेषनिवृत्त्या पुनस्तदनुवृत्तेरसम्भाविततया भगवते निवेदनं स्वशेषवृत्त्युपकारकतया पुनरप्राकृतदिव्यशरीरप्रदेयताज्ञापनार्थम् ।हे **क्रतो**-स्वप्रयोजकस्वाश्रयापृथक्सिद्धिसम्बन्धेन मदीयोपासनरूपक्रतुविशिष्ट भगवन् । मया क्रियमाणस्य भवदुपासनलक्षणक्रतोरपि स्वयमेव निर्वर्तनशील । इदं चानुसन्धानमुपासने स्वकर्तृकत्वादित्यागरूपं भगवति कृतज्ञतानुसन्धानरूपं चेति बोध्यम् । 'एष एव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषति' ॥ कौ ॥ ३९ ॥ 'तेषा सततयुक्ताना भजता प्रीतिपूर्वकम् । ददामि बुद्धियोगं त येन मामुपयान्ति ते ॥ तेषामेवानुकम्पार्थमहमज्ञानजं तमः । नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता' ॥ गी ॥ १० ॥ १० ॥ ११ ॥ इति श्रुतिस्मृतिभ्या स्वाश्रिताना स्वप्राप्त्यर्थस्वोपासनलक्षणक्रतोर्भगवता स्वयमेव निर्वर्त्यमानत्वं हि स्पष्टमभिधीयते । 'अहं क्रतुरहं यज्ञः' ॥ गी ॥ ९ ॥ १६ ॥ इति वदत्रापि क्रतुशब्देनोक्तसम्बन्धेन क्रतुविशिष्टत्वेन भगवतो निर्देशः । अयं च निर्देशः 'रसोऽहमप्सु

**बे**॥वर्षति वासवे ।शक्या गणयितु लोके न व्यतीताः पितामहाः' इति, 'ब्रह्मादिषु प्रलीनेषु' इत्यादि च । **इदमिति** विशेषणम् ईश्वरशरीरत्वेन नित्यत्वेनच प्रमाणसिद्धाना व्यवच्छेदार्थं । **भस्मान्तमि**ति सस्कारमात्रव्यञ्जकम् । कीटान्तत्वादेरन्यत्र प्रसिद्धस्योपलक्षण वा । शरीरशब्दे व्युत्पत्तिनिमित्तानुसारे विशरणस्वभावत्व गम्यते । 'एवं भोक्ता भोग्यं प्रेरितारञ्च मत्वा' इति क्रमेण चिदचिद्विवेक-

---

**कू**॥न्तरिक्षञ्च एतदमृतम्'इत्यादिकं परामृश्य वाय्वादिशब्दाना भूतद्वितीयविषयकत्वं नाशङ्कनीयं,पूर्वापराभ्याममङ्गतेः , नापि विशिष्टवृत्या वायुगतपरमात्मविषयत्वमाशङ्कनीय, नश्वरस्य देहस्य अनन्तरवचनेन न तद्व्यावृत्तप्रत्यगात्मपरत्वस्यैव न्याय्यत्वात् । 'क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एकः' । स्वभोग्यतया प्रधानं हरतीति हरः-जीव इत्यर्थः । 'क्षर त्वविद्या ह्यमृतं तु विद्या विद्याविद्ये ईशते यस्तु सोऽन्यः' इति श्वेताश्वतरीये भोग्यभोक्तृनियन्तृणा विवेचने अमृतशब्देन प्रत्यगात्मनोऽभिसन्धानदर्शनाच्च अत्राप्यमृतशब्दो जीवात्मपर इत्येव युक्तम् । एवं प्रत्यगात्मस्वरूपस्य 'न जायते म्रियते वा विपश्चित्' इत्यादिप्रसिद्धममृतत्वमभिधाय क्षेत्रस्य शरीरस्य मृतत्वमवश्यम्भावीत्याह—**अथेदं भस्मान्तं शरीरमिति** । प्रकृतादर्थादर्थान्तरविवक्षयात्राथशब्दः , जीवात्मोत्क्रमणानन्तर्यार्थको वा ; यद्वा कार्त्स्न्यपरः । स्मर्यतेच्च 'ब्रह्मादिषु प्रलीनेषु नष्टे स्थावरजङ्गमे । एकस्तिष्ठति विश्वात्मा स तु नारायणोऽव्ययः' इति । भस्मशब्दो दाहाख्यसंस्कारपरः । स खननादेरप्युपलक्षकः ।

---

**श्री**॥कौन्तेय' ।। गी ।। ७ ।। ८ ।। 'पुण्यो गन्धः पृथिव्याञ्च'।। गी ।। ७ ।। ९ ।।इत्यादिषु रसगन्धादिशब्दैर्भगवतो निर्देशवन्मुख्य एव । तत्र सर्वस्य परमपुरुषशरीरत्वेनात्मभूतपरमपुरुषप्रकारत्वात्सर्वप्रकारः परमपुरुष एवावस्थित इति सर्वैश्शब्दैस्तस्याभिधानम्मुख्यमित्याशयेनहि - 'रसोऽहमप्सु कौन्तेय' इत्यादिना सर्वैश्शब्दैर्भगवतस्सामानाधिकरण्यनिर्देशः प्रवृत्तः । न च 'यस्य चेतनस्य यद्द्रव्यं सर्वात्मना नियन्तुं धारयितुं च शक्यं तत्तस्य शरीरम्'इति शरीरलक्षणस्य द्रव्यत्वघटिततया रसगन्धादीनामद्रव्यत्वेन भगवन्त प्रति शरीरत्वासम्भवाच्छरीरवाचकाना शरीरिवाचकत्वन्यायेनेह वृत्त्यसम्भवेन कथं तद्वाचिना भगवत्परतया निर्देशो मुख्य इति वाच्य, शरीरवाचकानामपि शब्दाना शरीरिपरतायां शरीरशरीरिभावस्यापि शरीरशरीरिणोरपृथक्स्थितिप्रयोजकसम्बन्धे विशेषणविशेष्यभावरूपतयैव नियामकतया ताद्रूप्येण नियामकत्वाभावेनापृथक्स्थितिप्रयोजकसम्बन्धेन साक्षाद्वा परम्परया वा विशेषणविशेष्यभावस्थले सर्वत्रैव तादृशविशेषणविशेष्यभावस्य विशेषणवाचकानां तादृशसम्बन्धेन तद्विशिष्टवाचकतानियामकताया दुरपह्नवतायाः प्रागुक्ततया रसगन्धादीनामद्रव्याणामपि तथाविधेन स्वप्रयोजकस्वाश्रयापृथक्सिद्धिसम्बन्धेन भगवति विशेषणताया अव्याहतत्वेन तद्वाचकानामपि दर्शितसम्बन्धेन तद्विशिष्टत्वेन भगवत्परतायास्तस्या मुख्यतायाश्च दुर्वारत्वात् । 'यः पृथिव्या तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः' ।। बृ ।। ५ ।। ७ ।। ३ ।। इत्याद्यन्तर्यामिब्राह्मणादिसिद्ध भगवच्छरीरभावाना पृथिव्यबादीना तच्छरीरभावो ह्यपृथक्स्थितिप्रयोजकतदीयसम्बन्धविशेषायत्तस्वसत्तास्वभावकत्वरूपः, दर्शितप्रमाणबलसिद्धे प्रागुक्तशरीरलक्षणे तन्नियाम्यत्वस्य तदीयसम्बन्धविशेषायत्तस्वस्वभावकत्वरूपतायास्तद्धार्यत्वस्य तदीयसम्बन्धविशेषाधीनस्वसत्ताकत्वरूपतायाश्चाभिमतत्वात् । इत्थं च पृथिवीजलादिगतगन्धरसादिस्वभावविशेषाणामपि पृथिवीजलादिषु शरीरितया भगवतोऽवस्थाननिबन्धनतासिद्धेस्स्वाश्रयद्वारा परम्परयाऽपृथक्स्थितिप्रयोजकसम्बन्धेनैव भगवति सम्बद्धत्वाच्च तद्वाचिनां गन्धरसा-

वे॥मुक्त्वा प्रेरितारं प्रकृतं महापुरुषं प्रणवेनोपादत्ते—ओमिति।यथा आमनन्त्याथर्वणाः'यः पुनरेतं त्रिमात्रेण ओमित्येतेनैवाक्षरेण परमपुरुषमभिध्यायीत' इति। उक्तं च योगानुशासने 'क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरस्स पूर्वेषामपि गुरुः कालेनानवच्छेदात्' 'तस्य वाचकः प्रणवः' इति। आह च सर्वज्ञः—'ओमित्येवं सदा विप्राः पठध्वं ध्यात केशवम्' इति। स्वयञ्चागायत् 'ओमित्येकाक्षरं ब्रह्म व्याहरन्मामनुस्मरन्' इति। एवं सर्वत्र द्रष्टव्यम्। अथ क्रतुरूपिणं भगवन्तं ज्ञानयज्ञ-

---

कृ॥अथवा 'कलेबरं विट्क्रिमिभस्मसंज्ञितम्' इत्यन्यत्र प्रसिद्धक्रिम्यन्तत्वादेरुपलक्षको भस्मान्तशब्दः। त्यागे कृते क्रव्यादभक्षितं शरीरं विट्संज्ञितं भवति, खनने क्रिमिसंज्ञितं, दाहे भस्मसंज्ञितमिति भावः। ननु केषुचिच्छरीरेषु प्रत्यक्ष एव विनाशो दृष्टः; अविनष्टेष्वप्यन्येषु अनुमानाद्विनाशित्वं सुनिश्चितम्; अन्यथा शत्रून्प्रति शस्त्रादिकं न प्रयुञ्ज्येत; स्वयमपि शत्रुप्रयुक्तशस्त्रशरादिकं न निवारयेत्। एवं सम्प्रतिपन्नस्य भस्मान्ततादेरिहोपदेशे किं प्रयोजनमिति चेत्—उच्यते, आत्मशरीरयोरमृतत्वमृतत्वरूपविरुद्धधर्मप्रदर्शनेन भेदसमर्थनं तावदेकं प्रयोजनम्; अपथ्यपरिहाररसायनसेवादिभिः किं नित्यत्वं सम्भवेदिति सन्देहापाकरणं द्वितीयं, स्वदेहेऽपि वैराग्यजननं तृतीयं, विनाशहेतौ सत्यवश्यं नश्यतीतिवत् भगवदुपासनादिभिरत्यन्तविनाशस्यापि सम्भावनाद्योतनं चतुर्थं; शीघ्रं मोक्षोपाये प्रवर्तितव्यमिति त्वरासञ्जननं पञ्चमम्। एवमुक्तान्यनुक्तानि च प्रयोजनान्तराणि द्वितीयाध्यायतात्पर्यं च-

---

श्री॥दिशब्दानां स्वप्रयोजकस्वाश्रयापृथक्सिद्धिसम्बन्धेन गन्धरसादिविशिष्टत्वेन भगवत्परता सम्भवति। अत एव च 'पृथिव्यां पुण्यगन्धोऽस्मि' 'अप्सु रसोऽस्मि' इत्यादिभिः तत्रतत्र गन्धरसादिनिर्वाहकतयाऽन्तःप्रविश्य स्थितोऽस्मीत्येव बोधो विवक्षितः। न तु रसादिस्वरूपैक्यबोधः, तस्य परमात्मनि बाधितत्वात्। ईदृशी च भगवत्परता गन्धरसादिशब्दानां यथा मुख्या—तथैव क्रत्वादिशब्दस्यापीति नात्रोपचारप्रसङ्गः। अथोपासकः परविद्यासु समन्ततः प्रसिद्धं करणतया प्रणवानुसन्धानं पुरस्कृत्य स्वाभीष्टं विज्ञापयति—ओमित्यादिना। 'सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति। यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं सङ्ग्रहेण ब्रवीम्योमित्येतद्वै तत्॥१५॥एतद्ध्येवाक्षरं ब्रह्म एतद्ध्येवाक्षरं परम्। एतद्ध्येवाक्षरं ज्ञात्वा यो यदिच्छति तस्य तत्॥१६॥एतदालम्बनं श्रेष्ठमेतदालम्बनं परम्। एतदालम्बनं ज्ञात्वा ब्रह्मलोके महीयते'॥१७॥क॥२॥ 'यः पुनरेतं त्रिमात्रेणोमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत'॥प्र॥५॥५॥ तमोङ्कारेणैवायतनेनान्वेति विद्वान्यत्तच्छान्तमजरममृतमभयं परं चेति'॥प्र॥५॥७॥ इत्यादिषु श्रुतिषु परविद्यालम्बनतया प्रणवस्योपादेयत्वं सर्वतः प्रसिद्धम्। ओं सर्वप्रमाणमूलभूतमोङ्कारम्। स्मर-अनुसन्धेहि। ओमित्येतदत्र प्रणवस्वरूपपरम्। अव्ययत्वेन 'अव्ययादाप्सुपः'॥२॥४॥८२॥ इत्यनुशासनेन वा 'सुपां सुलुक्'॥७॥१॥३९॥ इत्याद्यनुशासनेन वाऽत्र विभक्तिलोपो द्रष्टव्यः। सर्वप्रमाणमूलप्रमाणसार्वभौमप्रणवप्रतिपन्नं सर्वजीवात्मनामनादिं स्वतस्सिद्धं त्वदनन्यार्हशेषत्वलक्षणं स्वरूपनिरूपकधर्मं सम्यगनुसन्धत्स्वेति यावत्। ततश्च 'नाकिञ्चित्कुर्वतश्शेषत्वम्' इति न्यायेन कैङ्कर्यलक्षणकिञ्चित्कारमन्तरेण शेषत्वासिद्धेः विग्रहपरिग्रहमन्तरा कैङ्कर्यासिद्धेश्च शेषत्वसंरक्षणार्थं यावदात्मभाविसर्वदेशसर्वकालसर्वावस्थोचिताशेषकैङ्कर्योपकरणविग्रहपरिग्रहयोग्यतागर्भपरमपुरुषार्थलक्षणमोक्ष एव पर्यवसानं मे प्रसादय; यावदात्मभाव्यनशरीरित्वगर्भकैवल्यलक्षणमोक्षे पर्यवसानं मा कृथा इति स्वाभीष्टनिवेदनं फलितम्। ननु ओङ्कारस्स-

वे॥गोचरमभिमुखीकुर्वंस्तदनुग्रहं याचते—**क्रतो स्मर कृतं स्मरे**ति।**क्रतो**-क्रत्वात्मक।यथाह 'अह क्रतुरहं यज्ञः' इति। 'यथा क्रतुरस्मिल्लोके पुरुषो भवति तथेतः प्रेत्य भवति' 'स क्रतुं कुर्वीत' 'एव क्रतुर्हं' इत्यादिष्विवात्रापि प्रकरणादेव क्रतुशब्द उपासनपरो वा। तद्गोचरेतु भगवति तच्छब्द उपचारात्। **स्मर** सानुग्रहया बुद्ध्या विषयीकुरु, 'स्नेहपूर्णेन मनसा यत्त्वं स्मरसि केशव' इतिवत्। उक्तञ्च भगवता 'स्थिते मनसि' इत्यारभ्य 'ततस्तं म्रियमाणं तु काष्ठपाषाणसन्निभम्। अहं स्मरामि

---

कू॥न्द्रिकायां द्रष्टव्यानि।एवं 'भोक्ता भोग्यं प्रेरितारं च मत्वा'इति क्रमेण चिदचिद्विवेकमुक्त्वा प्रेरितार प्राकृत महापुरुषं प्रणवेनोपादत्ते—**ओमि**ति। यथामनन्त्याथर्वणाः 'यः पुनरेतं त्रिमात्रेणोमित्यनेनैवाक्षरेण परमपुरुषमभिध्यायीत' इति। उक्तञ्च योगानुशासने 'क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरस्सर्वेषामपि गुरुः कालेनानवच्छेदात्' 'तस्य वाचकः प्रणवः' इति। आहच सर्वज्ञः 'ओमित्येव सदा विप्राः पठध्वं ध्यात केशवम्' इति। स्वयञ्चागायत् 'ओमित्येकाक्षरं ब्रह्म व्याहरन्मामनुस्मरन्' इति। एवं सर्वत्र द्रष्टव्यम्। अथवा शरीरमात्मानं च विविच्य विविक्तमात्मानमकारवाच्ये परमपुरुषे समर्पयति—**ओमि**ति। प्रणवस्य आत्मसमर्पणपरत्वम् 'ओमित्यात्मानं युञ्जीत' 'प्रणवो धनुश्शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते। अप्रमत्तेन वेद्धव्यं शरवत्तन्मयो भवेत्' इत्यादिषु प्रसिद्धम्। अथ क्रतुरूपिण भगवन्तं ज्ञानयज्ञगोचरमभिमुखीकुर्वंस्तदनुग्रहं याचते—**क्रतो स्मर**। **क्रतो**-ज्योतिष्टोमादिक्रियात्मक, यथाह 'अहं क्रतुरहं यज्ञः' इति। यज्ञः पञ्चमहायज्ञा इत्यर्थः। अथवा क्रतो-भक्तिस्वरूप, 'यथाक्रतुरस्मिल्लोके पुरुषो भवति तथेतः प्रेत्य भवति' 'स क्रतुं कुर्वीत' 'एवं-

---

**श्री॥**रणमात्रेण कथमेकान्ततो भवदभीष्टलाभो भविष्यति तस्य केवलं परमात्मस्वरूपपरताया अपि सत्त्वात् कैवल्यार्थ्युपासनसाधारणत्वाच्च।श्रूयते हि प्रणवकरणकोपासननिष्ठस्यसंसारनिवृत्तिमात्रलक्षणकैवल्यमोक्षपर्यवसानं नारायणोपनिषदि 'प्रत्यगानन्द ब्रह्मपुरुषं प्रणवस्वरूपम्। अकार उकार मकार इति। तानेकधा समभरत्तदेतदोमिति। यमुक्त्वा मुच्यते योगी जन्मससारबन्धनात्' इति। उत्तरत्र प्रणवगर्भिताष्टाक्षरमन्त्रोपासननिष्ठस्य वैकुण्ठलोकावाप्तिरूपपरमपुरुषार्थप्राप्तिः पृथगेव श्रवणादत्र केवलप्रणवोपासननिष्ठस्य कैवल्यमोक्ष एव विवक्षित इति हि स्पष्टम्। अत एव च गीतायामपि 'ओमित्येकाक्षरं ब्रह्म व्याहरन्मामनुस्मरन्। यः प्रयाति त्यजन् देहं स याति परमा गतिम्' ॥ गी ॥ ८॥ १३ ॥ इति कैवल्यमोक्षप्रेप्सोरपि प्रणवकरणकब्रह्मोपासननिष्ठत्वमभिहितं। 'क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः ॥ १ ॥ २४ ॥ स पूर्वेषामपि गुरुः कालेनानवच्छेदात् ॥ १ ॥ २६ ॥ तस्य वाचकः प्रणवः' ॥ १ ॥ २७॥ इति योगानुशासनेनापि प्रणवस्याखण्डस्य केवलसर्वेश्वरवाचकत्वमवगम्यते। विधीयते च योगानुशासने कैवल्यमोक्षमेव प्रतिपाद्य तन्निष्ठस्यैव प्रणवजपाद्युपासननिष्ठता॥ अतो नैकान्ततः प्रणवस्य स्मर्तव्यताज्ञापनमात्रेणोपासकस्य परमपुरुषार्थभूतकैङ्कर्यलक्षणमोक्षनिष्ठत्वं सुगममित्याशङ्कायामाह—**कृतं स्मरे**ति।अत्र कृतमित्यस्य कर्तृतया मयेति तृतीयान्तं सन्दर्भबलेनोपतिष्ठते। अनुषज्यते च ओमित्येतदपि।मया कृतमोमित्येतत् स्मर-यमर्थमनुसन्धायोपासनकरणतया प्रणवस्यानुसन्धानम्मया क्रियते, तमर्थमनुसन्धाय मदभीष्टं प्रसादयेत्यर्थः। प्रणवस्य भगवदनन्यार्हशेषत्वप्रतिपादकत्वप्रकारस्तु मूलमन्त्रार्थपरग्रन्थेषु स्पष्टएवेति तत्रैव सोऽवगन्तव्यः। इहैतन्मन्त्रकरणकोपासननिष्ठस्याधिकारिणः प्रागुक्तद्वादशत्रयोदशचतुर्दशमन्त्रैर्लब्धपुरुषार्थतत्त्वोपदेशस्य परम-

अग्ने नय सुपथा राये अस्मान् विश्वानि देव वयुनानि विद्वान् ।
युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नमउक्तिं विधेम ॥ १८

---

वे॥मद्भक्तं नयामि परमां गतिम्' इति।सर्वदा सर्वं साक्षात्कुर्वतः स्मर्तृत्ववचनमिह पूर्वकृतप्रत्यवेक्षणाभिप्रायम् । **कृतं स्मर**ेत्यत्रापि तथैव विवक्षा । मत्कृतं यत्किञ्चिदनुकूलमनुसन्धाय कृतज्ञस्त्वं मां रक्षेति भावः । एतावदन्तं त्वत्कृतमानुकूल्यं प्रतिसन्धाय त्वमेव शेषपूरणं कुर्विति वा । स्मरन्ति हि 'जायमानं हि पुरुषम्' इत्यादि । स्वयमप्याह—'तेषां सततयुक्तानाम्' इत्यादि । 'क्रतो स्मर कृत स्मर' इत्यावृत्तिरुक्तार्थे त्वरातिशयात् ॥ १७ ॥

---

कू॥क्रतुरहम्'इत्यादिषु क्रतुशब्दस्य भक्तियोगेऽपि प्रयोगदर्शनात् भक्तियोगगोचरे भगवति तच्छब्द उपचारादित्याचार्याः । रक्षकस्य भक्तियोगस्थाने निवेशन क्रतो इति सम्बोधनेन विवक्षितमिति भावः । **स्मर**-सानुग्रहया बुद्ध्या विषयीकुरु, 'स्नेहपूर्णेन मनसा किं न स्मरसि केशव' इतिवत् । उक्तञ्च भगवता 'स्थिते मनसि' इत्यारभ्य 'ततस्तं म्रियमाणं तु काष्ठपाषाणसन्निभम् । अहं स्मरामि मद्भक्तं नयामि परमां गतिम्' इति । अत्र 'स्मरामि' 'नयामि' इति पदद्वयस्य 'क्रतो स्मर' 'अग्ने नय' इति प्रार्थनाद्वयापेक्षया प्रतिवचनत्वावगमद्वारा वराहचरमश्लोकद्वयं 'वायुरनिलममृतम्'इत्यादिमन्त्रद्वयोपबृंहणमिति भावः । **कृतं स्मर**-मत्कृतं यत्किञ्चिदानुकूल्यमनुसन्धाय कृतज्ञस्त्वं मां रक्षेतिवा, एतावदन्तं त्वत्कृतमानुकूल्य प्रतिसन्धाय त्वमेव शेषपूरणं कुर्विति वा भावः । स्मरन्ति हि ' जायमान हि पुरुषम्' इत्यादि । उक्तार्थे त्वरातिशयात् 'क्रतो स्मर कृतं स्मर' इत्यावृत्तिः ॥ १७ ॥

---

ओ॥पुरुषार्थैकनिष्ठतासम्भवादस्य मन्त्रस्य यथोक्तरीत्यैवार्थोवक्तुमुचित इत्यनुसन्धेयम्।आवृत्तिस्त्वादरार्था । माध्यन्दिनपाठे 'क्लिबे' इत्यस्य अधाष्ट्र्यायेत्यर्थः । धाष्ट्र्यं हि परवश्यताप्रहाणेन स्वातन्त्र्येण वर्तनं । तद्धि कैवल्यनिष्ठस्यास्ति, भगवच्छेषवृत्तिमन्तरेण स्वात्मभोगैकपरायणत्वात्तस्य। तथा च—कैवल्यपुरुषार्थपर्यवसाननिबन्धनधाष्ट्र्यपरिहाराय ओंकारं स्मरेत्यर्थः ।अन्यत्सर्वं पूर्ववत् । 'क्लीबृ अधाष्ट्र्ये' इति धातोर्भावे क्विपि रूपमिदम् । अत्र वर्णवैरूप्यं तु च्छान्दसमिति बोध्यमिति ॥९॥ यत्पुनरत्र मन्त्रे 'वायुरनिलममृतम्' इत्यस्य प्रतिपद्यतामित्यध्याहृतपदघटितस्य मरणसमये प्राणस्य कारणवायौ लयप्रार्थनापरतया व्याख्यानं, लिङ्गं चेदं ज्ञानकर्मसंस्कृतमुत्क्रामत्विति वाक्यस्य लिङ्गशरीरोत्क्रमणप्रार्थनापरस्याध्याहारकरणम् 'अथेदं भस्मान्तँ शरीरम्, इत्यस्य भूयादित्यध्याहृतपदघटितस्य मरणानन्तरं स्थूलशरीरस्य भस्मान्तत्वापत्तिप्रार्थनापरतया व्याख्यानं,स्मरेत्यस्मिन्पदे प्रथमे समुत्थितकर्माकाङ्क्षाया यथार्हमध्याहृतपदेन परिहाराश्रयणं च शङ्करेण कृतम्॥१०॥तत्सर्वमसमञ्जसमेव - यथोक्तरीत्या स्वरसत एव निर्वाहे स्वैरम् अप्रार्थनावश्यकबहुलाध्याहार कल्पनाया अयुक्तत्वात् ,मरणसमये प्राणस्य कारणवायुलयः,लिङ्गशरीरोत्क्रमण मरणानन्तरस्थूलशरीरस्य भस्मान्तत्वापत्तिश्चेत्येतेषामंशानां प्रार्थनामन्तरेणैव सर्वाधिकारिसाधारण्येन स्वतः प्राप्नुवतां प्रार्थनाया आवश्यकतालेशानुपलम्भाच्च॥ ११ ॥ तस्माद्यथोक्तरीत्यैव व्याख्यानमस्य मन्त्रस्य युक्तमिति विवेकिनो विद्वांस एव विदांकुर्वन्तु ॥ १२ ॥ इति सप्तदशमन्त्रव्याख्यानम् ॥ १७ ॥

वे॥पुनरप्यग्निशब्दवाच्यं भगवन्तं स्वापेक्षितं प्रापयेत्याह-अग्ने॰नय सुपथा राये अस्मान्विश्वानिदेव वयुनानि विद्वान्।युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नमउक्तिं विधेम—इति॥ अग्ने-अग्निशरीरक,'यस्याग्निश्शरीरम्' इत्यन्तर्यामिब्राह्मणम्'साक्षादप्याविरोध जैमिनिः'इति न्यायात्,अग्रनयनादिगुणयुक्तेतिवा।

---

कृ ॥ पुनरप्यग्निशब्दवाच्य भगवन्त प्रति इष्टप्राप्तिमनिष्टनिवृत्तिं च प्रार्थयते—अग्ने नयेति। बृहदारण्यकेच सप्तमाध्याये 'यदा वै पुरुषोऽस्माल्लोकात्प्रैति स वायुम्' इत्यादिना अर्चिरादिकं पन्थानमुपदिश्य पश्चादध्यायावसाने 'हिरण्मयेन पात्रेण' इत्याद्या एते चत्वारो मन्त्राः क्रमेण पठिताः। अग्ने—अग्निशरीरक, 'यस्याग्निश्शरीरम्' इत्यन्तर्यामिब्राह्मणं। यद्वा 'साक्षादप्यविरोधं जैमिनिः' इति न्यायेन अग्र नयतीत्यग्निः अग्रनयनादिगुणयुक्त। नय—प्रवर्तयेत्यर्थः। सुपथा—शोभनमार्गेण

---

श्री॥ 'अग्ने नय' इत्ययम्मन्त्रः काण्वैरष्टादशमन्त्रतया पठ्यते॥१॥ माध्यन्दिनैस्तु षोडशमन्त्रतया॥२॥अथ यदि स्वाभीष्टोपकरणविग्रहपरिग्रहादरणं न जहासि,तर्हि भोगैश्वर्यलक्षणं पुरुषार्थमेवाश्रयस्व, तत्राप्यस्मत्परिचर्योपयोगिविग्रहपरिग्रहस्य तेनास्मत्परिचर्याकरणस्य ततस्त्वदीयशेषत्वस्वरूपाभ्रंशस्य च सम्भवादित्याशङ्कापरिहाराय प्रवृत्तोऽयम्मन्त्रः॥ ३॥ अस्य मन्त्रस्य पदविवरणं—हे अग्ने-अग्निशरीरक, स्वरूपसत्तास्वभावप्रयोजकापृथक्सिद्धिसम्बन्धेनाग्निविशिष्ट भगवन्निति यावत्। शरीरशरीरिभावस्य दर्शितसम्बन्धविशेष एव पर्यवसानात्प्रागुक्तरीत्या शरीरवाचकानां शब्दानां शरीरिपरत्वसम्भवाच्चात्राग्निशब्दोऽग्निशरीरकभगवत्परः।अग्निरपि हि भगवतश्शरीरभूत एव'योऽग्नौ तिष्ठन्नग्नेरन्तरो यमग्निर्न वेद यस्याग्निश्शरीरं योऽग्निमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः'॥ बृ ॥ ५ ॥ ७ ॥ ५ ॥ इत्यन्तर्यामिब्राह्मणात्। अत्राग्निशरीरकभगवतस्सम्बोधनमर्चिरादिमार्गेऽग्नेः प्रथमातिवाहिकत्वेन तच्चोदनेन तद्द्वारा तेन मार्गेण स्वनयनविज्ञापनार्थम्। अस्मान्-स्वसम्बन्धिनामपि ग्रहणाशयेन बहुवचनम्। सुपथा-शोभनश्चासौ पन्थाश्च-सुपन्थाः तेन अपुनरावृत्तिलक्षणेनार्चिरादिमार्गेण।शोभनत्वमत्रापुनरावृत्तिलक्षणत्वमेव। तेन पुनरावृत्तिलक्षणधूमादिमार्गव्यावृत्तिः।'न पूजनात्'॥५ ॥ ४ ॥ ६९ ॥इत्यनुशासनेनात्र समासान्तकार्यनिवृत्तिः। राये-परमप्राप्यभूताय परमपुरुषलक्षणाय धनाय। भगवत्प्राप्तिलक्षणपरमपुरुषार्थरूपमुक्तैश्वर्यायेति यावत्।स्वरूपयाथात्म्यविदा परमपुरुष एव हि परमं धनं 'धनम्मदीयं तव पादपङ्कजं' 'यो नित्यमच्युतपदाम्बुजयुग्मरुक्मव्यामोहतस्तदितराणि तृणाय मेने' इत्यादिभिस्तस्यैव तद्धनत्वावगमात्। अपि च—अर्चिरादिमार्गेण प्रापणीयैश्वर्यस्य भगवत्प्राप्तिलक्षणपरमैश्वर्यादन्यत्वं हि न सम्भवति—भोगैश्वर्यस्य धूमादिमार्गेणैव प्रापणीयत्वात्कैवल्यस्यैश्वर्यरूपताया एवासम्भवाच्च। परिशेषादर्चिरादिमार्गप्रापणीयं धनं भगवत्प्राप्तिलक्षणं परमपुरुषार्थरूपं मुक्तैश्वर्यमेव पर्यवस्यति।'राये अस्मान्'इत्यसन्धिश्छान्दसः।नय देशविशेषे गमय। भोगैश्वर्यलक्षणे कैवल्यलक्षणे वा पुरुषार्थे पर्यवसान मा कृथा इति यावत्।'सुपथा'इत्यर्चिरादिमार्गग्रहणेन प्राकृतविषयानुभवलक्षणभोगैश्वर्यव्यावृत्तेः धनपर्यायरैशब्देन कैवल्यव्यावृत्तिः, धनशब्दस्य भोक्तृस्वरूपातिरिक्तभोग्यभोगोपकरणविषयपरत्वात् - कैवल्ये स्वात्मस्वरूपस्यैव परमप्राप्यत्वाच्च। हे देव-लीलाविभूतौ क्रीडालक्षणलीलानुभवरसिक। तादृशरसानुभवकौतुकेन त्वया प्रणीतमायायास्त्वयैव निवर्तनीयायास्त्वदन्येव निवर्तयितुमशक्यत्वेन तन्निवर्तनाय त्वामेव प्रार्थये 'दैवी ह्येषा गुणमयी मम माया दुरत्यया। मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते'॥गी॥७॥१४॥इति त्वयैव ह्युक्तमिति भावः।विश्वानि वयुनानि-सर्ववि-

**वे**॥**नय**--प्रवर्तयेत्यर्थः।**सुपथा**--शोभनेन मार्गेण। प्रतिषेधस्पर्शरहितेनोपायेनेति यावत् । **राये**---विद्यार्थशरीरसरक्षणत्वदर्चनाद्यनुगुणाय धनाय। विद्यार्थप्रकरणानुगुण्यात् 'अतस्करकरग्राह्यमराजकवशंवद । अदायादविभागार्हं धनमार्जय सुस्थिरं' 'व्रत मे वित्तम्' इत्यादिषूक्तमलौकिकं धनमिह वि-

---

**कू**॥प्रतिषेधस्पर्शरहितेन याजनाध्यापनाद्युपायेनेति यावत्। **राये**—विद्यार्थशरीरसंरक्षणत्वदर्चनानुगुणाय धनायेत्यर्थः । अथवा 'अतस्करग्राह्यमराजकवशंवदम् । अदायादविभागार्हं धनमार्जय सुस्थिरम् ' 'अनन्त व्रत मे वित्तम् ' इत्यादिषूक्तमलौकिकधनमिह विवक्षितं , विद्याप्रकरणानुगुण्यात् । एक एव मन्त्रः प्रकरणादिभिर्विशेषितस्तत्तदनुगुणमर्थं बोधयतीति सम्यङ्न्यायविद इत्याचार्याः । यद्वा –**अग्ने नय**-प्रापयेत्यर्थः। **सुपथा**—अर्चिरादिपथेन, बृहदारण्यकपाठेऽर्चिरादिपथस्य बुद्धिस्थत्वात् , 'अर्चिरहस्सितपक्षानुदगयनाब्दौ च मारुतार्केन्दून् । अपि वैद्युतवरुणेन्द्रप्रजापतीनातिवाहिकानाहुः' इत्यभियुक्तसङ्गृहीतेन मार्गेणेति भावः । अर्चिरादिमार्गाविवक्षाप्याचार्याभिप्रेतैव । **राये** इत्यत्र ब्रह्मणः प्राप्यत्वोपवर्णनात् ब्रह्मैवहि सुस्थिरमनन्तमलौकिकं च धनम् । अत एव तत्रतत्रैवमुच्यते 'धनं मदीय

---

**श्री**॥धान्युपासनलक्षणानि विज्ञानानि'माया वयुनंज्ञानम्'इति हि नैघण्टुकाः।**विद्वान्** जानंस्त्वमेव।सर्वाधिकारिगतान् सर्वानुपासनभेदान् जानंस्त्वमेवेति यावत्।एतद्विशेषणाभिधान स्वोपासनोद्देश्याशस्यापि भगवताज्ञाततयातद्विरोधिनिबर्हणद्वारा तत्प्रापणार्थम्।'अस्मान्'इत्येतदिहाप्यनुषज्यते।अस्मान्**जुहुराणं** प्रसह्य हरत्।भवत्प्राप्तिलक्षणपरमपुरुषार्थादन्यत्र भोगैश्वर्यादिक्षुद्रपुरुषार्थे चापलजननेन प्रसह्याकर्षदित्यर्थः।**एनः**गुणमयत्वदीयमायामयं पापम्।**अस्मत्**-अस्मत्सकाशात्।**युयोधि**-वियोजय.'यु-मिश्रणामिश्रणयो.' इत्यनुशासनोक्तामिश्रणस्य विभागरूपत्वात् । भोगैश्वर्यादिक्षुद्रपुरुषार्थप्रापकमस्मदभिमतविरोधिभूतं गुणमयत्वदीयमायामयं पापं दूरीकृत्य भवत्प्राप्तिलक्षणं परमपुरुषार्थं त्वमेव प्रापयेति भावः । कुत एष निर्बन्धः क्रियते? भोगैश्वर्यलक्षणपुरुषार्थप्राप्तावपि मच्छेषवृत्त्यनुष्ठानं हि सम्भवति । अत एव च 'दिवि वा भुवि वा ममास्तु वासो नरके वा नरकान्तक प्रकामम् । अवधीरितशारदारविन्दौ चरणौ ते मरणेऽपि चिन्तयामि' इत्याद्युक्तरीत्या महात्मभिरपि भोगैश्वर्यालये स्थितिमनिरुन्धानैरेव मत्परिचर्याप्रार्थनं क्रियमाणं दृश्यत इत्यत्राह—**भूयिष्ठामित्यादि**।**भूयिष्ठां** भूयसीं कालापरिच्छिन्नां यावदात्मभाविनीमित्यर्थः।**ते**-तुभ्यं,**नमउक्ति**-नमश्शब्दानुसन्धानं,तदुपलक्षितासर्वावस्थोचिताशेषशेषवृत्तिरूपां परिचर्यामिति यावत् ।'ये च मुक्ता भवन्ताहि नरा भरतसत्तम । तेषां लक्षणमेतद्धि यच्छ्वेतद्वीपवासिनाम् ' ॥ भा ॥ शा ॥ ३३६ ॥ १४ ॥ इत्यभिधानपूर्वकं ' कृताञ्जलिपुटा हृष्टा नम इत्येव वादिनः' ॥ भा ॥ शां ॥ ३३७ ॥ ४० ॥ इत्युक्तया नमश्शब्दानुसन्धानपूर्वकयावदात्मभाविसर्वविधपरिचर्यैवहि मुक्तैश्वर्यरूपाऽभिहिता। **विधेम**-विदध्याम । 'विध विधाने' इति तौदादिकाद्विधतेः प्रार्थनायां लिङ् । यावदात्मभाविसर्वावस्थोचिताशेषशेषवृत्तिलक्षणकैङ्कर्यरूपं परमपुरुषार्थमेव यतो वयं प्रार्थयामहे - ततस्तद्विरोधिसत्त्वरजस्तमोगुणद्रव्यमयत्वदीयमायान्वयं निश्शेषं निवर्तय। सति तु दर्शितगुणमयमायान्वये सत्त्वोद्रेककाले कदाचित्त्वदीयपरिचर्यान्वयसम्भवेऽपि रजस्तमोभ्यां स्वोद्रेककाले तन्निरोधेन तद्विच्छेदस्य दुर्वारत्वाद्भूयसा कालेन शनैश्शनैरधोगतिप्राप्तेरपि सम्भावितत्वाच्च निश्शेषतन्निवर्तनपूर्वकं भवत्परिचर्यालक्षणपरमपुरुषार्थमेव प्रापय । केषाञ्चिदत्रैव भवत्परिचर्याप्रार्थनमप्यन्यादृशपरिचर्यायास्सहसा दुर्लभत्वाभिप्रायेण सम्प्रतीदृश्यपि परिचर्या लब्धा चेद्वरमित्याशयेनैवेति भावः।

वे॥ वक्षितम् । एक एव मन्त्रः प्रकरणादिभिर्विशेषितस्तत्तदनुगुणमर्थं विवक्षतीति सम्यङ्न्यायविदः । **अस्मान्**—त्वदनन्यभावान् अनन्यगतीश्च। **विश्वानि देव वयुनानि विद्वान्**—**देव**-अस्मदपेक्षितप्रदानानुरूपविचित्रक्रीडायुक्त । 'माया वयुन ज्ञानम्' इति नैघण्टुकाः । अतो ज्ञानमुखेन उपायवि

---

कू॥ तव पादपङ्कज' 'यो नित्यमच्युतपदाम्बुजयुग्मरुक्मव्यामोहतः' 'दुरीश्वरद्वारबहिर्वितर्दिकादुरासिकायै रचितोऽयमञ्जलिः' 'यदञ्जनाभ निरपायमस्ति मे धनञ्जयस्यन्दनभूषण धनं' 'न मे पित्रार्जितं द्रव्यं न मया किञ्चिदार्जितम् । अस्ति मे हस्तिशैलाग्रे वस्तु पैतामह धनम्' इति । अत्रचैव शाङ्करं व्याख्याने 'सुपथा शोभनमार्गेण, सुपथेति विशेषणं दक्षिणमार्गनिवृत्त्यर्थं, विषण्णोऽहं दक्षिणेन मार्गेण गतागतलक्षणेन, अतो याचे त्वा पुनःपुनर्गमनागमनवर्जितेन शोभनेन पथा नयेति' इति । राये हिरण्यनिधिसरूपाय पुरुषाय, त्वत्प्राप्तये इति भावः । **अस्मान्**—अनन्यप्रयोजनाननन्यगतींश्चेत्यर्थः । न केवल माम्, अपित्वनुबन्धिजनानपीति बहुवचनस्याभिप्रायः। **देव**—अस्मदपेक्षितप्रदानानुगुणविचित्रजगत्सृष्टिस्थितिसंहारान्तःप्रवेशनियमनस्वाश्रितविमोचनादिरूपविलक्षणक्रीडायुक्त । 'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै । तँ ह देवमात्मबुद्धिप्रसादं मुमुक्षुर्वै शरणमहं प्रपद्ये' इति मन्त्रेऽपि देवशब्दस्यैवमेवाभिप्रायः । वयुनशब्दो ज्ञानवाची, 'माया वयुनं ज्ञानम्' इति नैघ-

---

श्री॥ यद्वा-यदि मायान्वयं न निवर्तयसि तदा तवापि दुर्भरं कार्यं करिष्याम इत्याशयेनोच्यते-**भूयिष्ठामित्यादि**। **भूयिष्ठां**-भूयसीं, भूरिभाररूपतया तवापि दुर्भरा ते नमउक्तिमेव, **विधेम**-तवापरिहार्यमहार्कंष्टरूपा नमइत्युक्तिमेव करिष्याम इति यावत् । 'अञ्जलिः परमा मुद्रा क्षिप्रं देवप्रसादिनी' इत्येवं भरद्वाजसंहितोक्तलक्षणं हि भवदीयं शील; तदुपरि नमइत्यस्याप्यभिधानं तव दुर्भरो भारः किल भविष्यति। 'शङ्खचक्रगदापाणे द्वारकानिलयाच्युत । गोविन्द पुण्डरीकाक्ष रक्ष मां शरणागतां' 'हा कृष्ण द्वारकावास क्वासि यादवनन्दन । इमामवस्थां संप्राप्तामनाथां किमुपेक्षसे' इत्यनन्यशरणत्वाकारलक्षणनमश्शब्दार्थानुसन्धानपूर्वकद्रौपदीकृतरक्षणप्रार्थना—'गोविन्देति यदाक्रन्दत्कृष्णा मां दूरवासिनं । ऋणं प्रवृद्धमिव मे हृदयान्नापसर्पति' 'नातिस्वस्थमना ययौ' इत्यादिभिस्तवापि दुर्भरभाररूपा बभूवेति हि विज्ञायते । अतस्त्वदीयस्वभावपर्यालोचनयापि नमउक्त्यनुसन्धानेन त्वत्क्लेशनात्प्रागेव द्रुतमस्मदभिमतं समर्थयेति भावः । यद्यप्यस्य मन्त्रस्य तत्रतत्राग्निकर्मसु तदुपस्थाने विनियोगदर्शनात्तदनुगुण एवार्थो वर्णनीयः, तथापि परविद्याप्रकरणानुगुण्येनायमेवार्थो न्याय्यः, एकस्यैव मन्त्रस्य 'सैन्धवमानय' इति वाक्यस्येव नानार्थकतायाः स्थलभेदेनार्थभेदेन विनियोगभेदस्य च सम्भवेन विरोधाभावादित्यवधेयम् । 'यु-मिश्रणामिश्रणयोः' इति यौतिरयमदादिगणघटको धातुः । तस्मादपि - 'बहुलं छन्दसि' ॥ २ ॥ ४॥७६ ॥ इत्यनुशासनेन-छन्दसि विषये बहुलं शपः श्लुर्भवति, यत्रोक्तं तत्र न भवति, अन्यत्रापि च भवति-इत्यर्थकेन लोटि सिपि शपः श्लुर्भवति । ततः 'श्लौ' ॥ ६ ॥ १ ॥ १० ॥ इत्यनुशासनेन धातोर्द्विर्वचने ॥ 'सेऽह्यपिच्च' ॥ ३ ॥ ४ ॥ ८७ ॥ इत्यनुशासनेन सेर्ह्यादेशे 'वा छन्दसि' ॥ ३ ॥ ४ ॥ ८८ ॥ इत्यनुशासनेन तदपित्त्वस्य वैकल्पिकत्वेन ङित्त्वाप्राप्तौ 'आङितश्च' ॥ ६ ॥ ४ ॥ १०३ ॥ इत्यनुशासनेन हेर्ध्यादेशे तस्य ङित्त्वाभावेन - 'सार्वधातुकार्धधातुकयोः' ॥ ७ ॥ ३ ॥ ८४ ॥ इत्यनुशासनेन गुणे च सति युयोधीति रूपं भवतीति बोध्यम् । 'ह्वृप्रसह्यहरणे' इति

वे॥शेषा इह वयुनशब्देन विवक्षिताः । सर्वान्—तत्तदधिकारानुगुणान् चतुर्विधपुरुषार्थोपायान् यथावत् विद्वान् त्वमविदुषोऽस्मान् नेतुमर्हसीति भावः । **युयोध्यस्मज्जुहुराण**—बन्धनात्मकतया अचिन्त्यप्रकारकौटिल्यवत्तयावा बाधमानमित्यर्थः । **एनः**—अकृत्यकरणकृत्याकरणादिरूपं त्वदनुभ-

---

कृ॥ण्टुकोक्तेः।अस्तु लक्षणया ज्ञातव्योपायपरः।**विश्वानि वयुनानि**—सर्वानपि तत्तदधिकारानुगुण-चतुर्विधपुरुषार्थोपायान्यथावद्विद्वांस्त्वमविदुषोऽस्मान्नेतुमर्हसीति भावः।'यो वै वेदांश्च प्रहिणोति तस्मै' इति मन्त्रपदानामप्येतदेव हृदयम् । 'मुमुक्षुर्वै शरणमहं प्रपद्ये' इति मन्त्रगतमुमुक्षुपदं विवृण्वन्नाह—**युयोध्यस्मज्जुहुराणमेन** इति। 'हृ-कौटिल्ये'। **जुहुराणं**-कुटिल बन्धनात्मकमित्यर्थः । यद्वा—अचिन्त्यप्रकारकौटिल्यतया बाधमानमिति भावः । अनेन विशेषणेन अतितीव्रः शोकवेगो द्योत्यते । **एनः**—अकृत्यकरणकृत्याकरणादिरूप त्वदुपासनोत्पत्तिप्रतिबन्धकमित्यर्थः । त्वत्प्राप्तिप्रतिबन्धकमिति-वा । **एन** इत्येकवचनं जात्यभिप्रायकं । वस्तुतस्तु 'कियदिदं निवर्त्यमेनः? निवर्तकानुरूप हि न भवति; नहि सर्वशक्तेस्तवेदमनुरूपं लक्ष्यं; नापि नमउक्तेः ; भूयसी हि सा' इत्येकवचनस्याभिप्रायः । **अस्मत्**—अस्मत्तः, **युयोधि**—पृथक्कुरु, विनाशयेति भावः । यद्वा- पृथक्कुरु, एतावदेव याचे त्वा, जुहुराणमेनोऽस्मत्तः प्रथमं त्रियोजयेति, तत्पश्चाद्यथामनोरथ विनाशयसि चेद्विनाशय, पुरुषान्तरे सङ्क्रामयसि चेत्सङ्क्रामय, नास्ति तत्रास्माकं निर्बन्ध इति भावः । **भूयिष्ठाम्**—अनन्यगति त्वादिगुणैरावृत्तितश्च भूयसीं, **नमउक्तिं, ते**—अवाप्तसमस्तकामतया निरुपाधिकसर्वस्वामितयाच

---

श्री ॥ जुहोत्यादिगणघटकस्य धातोः परस्मैपदिनोऽपि 'व्यत्ययो बहुलम् ॥३॥१॥८५॥ इत्यनुशासनेन छान्दसपदव्यत्ययेनात्मनेपदलडादेशतकारे अस्मिन् सूत्रे 'बहुलम्' इति विभज्य- 'छन्दसि विषये सर्वे विधयो भवन्ति'इति भाष्ये व्याख्यानेन 'बहुलं छन्दसि' ॥ ७ ॥ १ ॥ १०३ ॥ इत्यनुशासने बहुलग्रहणबलेन च ऋदन्तधात्वङ्गं प्रति तत्सूत्रविहितोकारादेशस्य ऋदन्तधात्वङ्गस्यापि स्वीकारे ऋकारस्य रपरोकारादेशे धातोर्द्विर्वचनाभ्यासवर्णलोपविकारेषु लडादेशतकारस्य शानचि च कृतेषु जुहुराणमिति रूपं भवति। यद्वा'हुर्छा कौटिल्ये'-इति भौवादिकधातोः परस्मैपदिनोऽपि प्रागुक्तानुशासनबलेन छान्दसपदव्यत्ययेनात्मनेपदलडादेशतकारे 'बहुल छन्दसि'॥ २ ॥ ४ ॥ ७६ ॥ इत्यनुशासनेन प्रागुदाहृतेन शपः श्लौ जाते ततो धातोर्द्विर्वचने 'हलादिश्शेषः' ॥ ७ ॥ ४ ॥ ६० ॥ इत्यनुशासनेनाभ्यासरेफछच्कारयोर्लोपे 'कुहोश्चुः' ॥७ ॥ ४ ॥ ६२॥ इत्यनुशासनेनाभ्यासहकारस्य जकारे'राल्लोपः' ॥ ६ ॥ ४ ॥ २१ ॥ इत्यनुशासनेन छकारलोपे लडादेशतकारस्य शानचि च कृते जुहुराणमितिरूपं भवति । धात्वर्थकौटिल्यं च वञ्चकत्वं। तथा च अस्मान् जुहुराणं वञ्चयत् परमप्राप्यभगवत्स्वरूपं तिरोधाय क्षुद्रप्राप्यान्तरभोग्यताबुद्धिजननेन तत्र प्रवर्तयदित्यर्थो बोध्यः। यद्वा 'हुर्च्छेस्सनो लुक्छलोपश्च' ॥ उ ॥ २ ॥९० ॥ इत्युणादिद्वितीयपादसूत्रेण हुर्च्छेर्धातोः कर्तरि वर्तमानेऽर्थे आनच्प्रत्ययो भवति सन्प्रत्ययस्य लुक्छलोपश्च-इत्यर्थकेन हुर्च्छेर्धातोरानचि कृते कृतसन्प्रत्ययतदधीनद्विर्वचनस्य तस्य धातोस्सनश्छस्य च लोपे जुहुराणमिति रूपं भवति। तदा जुहुराणं सदा वञ्चयितुमुद्यतमित्यर्थोऽवसेयः सर्वधाप्यस्मदपकारकरणैकोद्यतमिति पर्यवसन्नोऽर्थः, धात्वर्थकुटिलत्वस्य भाववक्रीकरणरूपक्रौर्ये पर्यवसानात्।'जुहुराणश्चन्द्रमाः'इतितु आकारवक्रीकरणाभिप्रायेण प्रयोगइति बोध्यम्।इहकौटिल्यमपसरणमिति मैत्रेयपक्षे धातोरकर्मकत्वमभिमतम्।वञ्चकत्वं कौटिल्यमिति पक्षे सकर्मकत्वमिति भेदोऽवसेयः।अपसरं-

वे ॥ णमनृजुवादिप्रतिबन्धकम्,अस्मत्तो **युयोधि**— पृथक्कुरु, विनाशयेत्यर्थः। **भूयिष्ठां ते नमउक्तिं विधेम**-'अनन्यगतिः' इत्यादिगुणैरावृत्तितश्च भूयसीं नमउक्तिं ते विदध्महे।व्यत्ययो हि बहुलमनुशिष्टः। नमउक्तेरनुवृत्तिं वा नाथ प्रति नाथते। 'नम इत्येववादिनः' इति हि मुक्तलक्षणा अपि पुरुषाः मोक्ष-

---

**कू**॥ नमउक्त्यन्यनिरपेक्षाय ते,**विधेम** —विदध्महे,व्यत्ययो बहुलमनुशिष्टः।नमउक्तेरमनुवृत्तिं वा नाथ प्रति नाथते। 'नम इत्येव वादिनः' इति हि मुक्तानामपि लक्षण मोक्षधर्मे श्रुतम्। मानसकायिकयोर्न- मसोरभावेऽपि नमश्शब्दमात्रेण त्व प्रसन्नो भवितुमर्हसीत्युक्तिशब्दाभिप्रायः। हे अग्ने देव विश्वानि वयुनानि विद्वान् त्वं जुहुराणमेनोऽस्मत्तो युयोधि, सुपथाऽस्मान्राये नय, वय ते भूयिष्ठां नमउक्तिं विधेमेत्यन्वयः। नित्याञ्जलिपुटा हृष्टा नमउक्तिं विधिमेत्यर्थः। नमइत्येववादिनो भावामेति भावः ॥ १८ ॥

एवमस्मिन्ननुवाके आदितो मन्त्राष्टकस्य चेतनाचेतनरूपमपरतत्त्वद्वयं कर्मयोगज्ञानयोग- रूप व्यवहितोपायद्वयंच प्रधानप्रतिपाद्यम्; उपरितनाष्टकस्य तु परतत्त्वपरमपुरुषविषयकं भक्तियोगरूपं साक्षात्साधनम्; अवशिष्टमन्त्रद्वयस्य सर्वफलसाधन प्रपदनं प्रधानप्रतिपाद्यम्। एवं च श्रीभगवद्गीता- ध्यायेषु प्रथमषट्कं प्रथमाष्टकस्योपबृंहणं, द्वितीयषट्क द्वितीयाष्टकस्य, तृतीयषट्कमवशिष्टमन्त्रद्विक-

---

**श्री**॥गमनं वक्रगमनमिति पर्यवसन्नम्, अन्यथाऽपसरणस्य कौटिल्यशब्दबोध्यत्वासम्भवात्। 'तदा जुहुराणश्चन्द्रमाः' इत्यत्र विक्षेपवशाद्वक्रगन्ताचन्द्रमा इत्यर्थोऽवसेयः।'जुहुराणमेनः' इत्यत्र तु जुहुराणम् अनादिकालाद्वक्रमेवगच्छत्-अपकारं कुर्वदेव गच्छत्.न तु तं विना तूष्णीमृजु गच्छदित्यर्थः। इदानीं त्वस्मानित्यस्य नानुषङ्ग आवश्यक इति ॥ ४ ॥

अयमत्रैतदुपनिषदर्थतात्पर्यसङ्ग्रहः—प्रथममन्त्रे सर्वेश्वरस्य नियन्तृत्वशेषित्वे जगतो नियाम्यत्वशेष- त्वे च तत्तदसाधारणाकारौ ज्ञापयित्वा तद्बलेन मुमुक्षोस्स्वसम्बन्धिसर्ववस्तुषु कर्तृत्वममताफलविषयात्रि- विधत्यागलक्षणज्ञानविशेषेण संस्करणपूर्वकं तेषु भगवद्भोगान्तर्गततयैव स्वभोगविधानमुखेन वक्ष्यमा- णपरविद्याङ्गभूतकर्मयोगापेक्षितो ज्ञानविशेषलक्षणसंस्कारविशेषो दर्शितः ॥ १ ॥ - स च ज्ञानविशेषः भगवानेव स्वनियाम्यस्वरूपस्थितिप्रवृत्तिस्वशेषतैकरसेनानेनात्मना स्वकीयैश्च देहेन्द्रियान्तःकरणैः स्व- कीयैरेव कर्मभिस्स्वकीयद्रव्यमयैरेव च भोगैः स्वात्मान स्वयमेव प्रीतं कारयति' इत्येवमादिरूपः - २ - द्वितीयमन्त्रे च वक्ष्यमाणपरविद्याङ्गतया यावज्जीवं यथाधिकारं कर्मयोगोऽप्यनुष्ठेयतया दर्शितः - ३ - कर्मयोगस्यार्वाचीनफलद्वारा बन्धकत्वभ्रमपरिहाराय दर्शितत्यागविशेषलक्षणसंस्कारबलेनार्वाचीनफल- सम्बन्धलक्षणतल्लेपासम्भवोऽपि ज्ञापितः ४ - तृतीयमन्त्रे च प्रथमद्वितीयमन्त्रपर्यवसन्नार्थभूतशेषित्वनिय- न्तृत्वलक्षणपरस्वरूपयाथात्म्यशेषत्वनियाम्यत्वलक्षणस्वस्वरूपयाथात्म्यैतदुभयज्ञानपूर्वकपरविद्याङ्गकर्म- योगानुष्ठानविरहिणामात्मघ्नत्वेन निन्दापूर्वकं परविद्यावैधुर्येण क्रमेण महानर्थप्राप्तेरवर्जनीयत्वाभिधान- मुखेन दर्शितलक्षणकर्मयोगनिष्ठाया अतिशीघ्रमेवावश्यसम्पादनीयता दर्शिता - ५ - चतुर्थादिभिरष्ट- मान्तैः पञ्चभिर्मन्त्रैः अनेकात्मसु सत्सु तत्रैकस्य परं कथं नियन्तृत्वशेषित्वे?कथ वाऽन्येषा सर्वेषा चेत- नाचेतनानामविशेषेण नियाम्यत्वशेषत्वे? इत्याशङ्कापरिहारार्थमत्र विवक्षितपरविद्यायामनुसन्धानार्थं च परमात्मनोऽघटितघटनासामर्थ्याखिलभूतान्तरात्मत्वादिकल्याणगुणाश्रयत्वं तथाविधाकारानुसन्धानफ- लप्रदर्शनमुखेन तदनुसन्धानावश्यकता च प्रत्यपादि - ६ - नवमप्रभृतिभिरेकादशपर्यन्तैस्त्रिभिर्मन्त्रैर्मु- मुक्षोः कर्मविद्ययोरेकैकमात्रानुष्ठानेऽनर्थपर्यवसानावर्जनीयताज्ञापनमुखेन कर्मसहचरिताया एव विद्याया

वे॥धर्मे प्रतिपादिताः। मानसकायिकयोर्नमसोरभावेऽपि नमश्शब्दमात्रेण प्रसक्तुमर्हतीत्युक्तिशब्दाभिप्रायः । एवं परतत्त्वतद्विभूतियोगतदुपासनतद्विशेषान् सङ्गृह्य सहितेयं समपूर्यत ॥ १८ ॥

व्यक्ताव्यक्ते वाजिना सहितान्ते व्याख्यामित्थ वाजिवक्त्रप्रसादात् ।
वैश्वामित्रो विश्वमित्र व्यतानीद्विद्वच्छात्रप्रीतये वेङ्कटेशः ॥ १ ॥
अभेदं भोक्तृणामथच भविनामेव परतां तथा भेदाभेदं जिनसुगतनीति च जगति ।
असम्पाद्या मुक्ति भवभयमलीकं च पठतामसावीशेत्यादिर्न कथमनुवाकः प्रतिभटः ॥ २ ॥

हरिःओम्

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य श्रीमद्वेदान्ताचार्यस्य कृतिषु
ईशावस्योपनिषद्भाष्यम् .

कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥

---

कू॥स्योपबृंहणम् ।तृतीयषट्कहि प्रथममध्यमषट्काभ्यामुक्ततत्त्वोपायपुरुषार्थविशदीकरणपूर्वकं शरणागतिविधिप्रधानम्। तत्र चरमश्लोकस्य पूर्वार्धं 'वायुरनिलममृतम्' इति मन्त्रोक्तानुष्ठानविधायकम्। उत्तरार्धन्तु 'युयोध्यस्मज्जुहुराणमेनः' इति प्रार्थ्यमानानां प्रार्थनापूरणसङ्कल्पपूर्वकं शोकप्रतिक्षेपकमिति चरमश्लोकोऽप्यस्य मन्त्रद्विकस्योपबृंहणमेवेति सिद्धम् । एवं परतत्त्वतद्विभूतियोगतदुपासनतत्प्रपदनतत्फलविशेषान् सङ्गृह्य संहितेयं समपूर्यत ॥

वेदान्तगुरुपादाब्जध्याननिर्मलचेतसा ।
वाजिवेदान्तसारार्थः श्रीवत्साङ्केन दर्शितः ॥
यदिह रहस्यं विवृतं यद्वा न्यूनं वचोऽधिकं यच्च ।
कृपया तदिदं सर्वं देवः क्षमते तथा महान्तोऽपि ॥

इति श्रीमत्सर्वतन्त्रोभयवेदान्ताचार्यस्य परमहंसपरिव्राजकाचार्यस्य
श्रीवत्साङ्कश्रीमन्नारायणमुनीन्द्रस्य कृतिषु
ईशावास्यप्रकाशिका ॥

---

श्री॥अनुष्ठेयता प्रतिपादिता ७ द्वादशादिभिश्चतुर्दशपर्यन्तैस्त्रिभिर्मन्त्रैः सामान्यतश्शरीरप्राप्तिगर्भितपुरुषार्थोद्देशेन वा सामान्यतोऽशरीरत्वप्राप्तिगर्भितपुरुषार्थोद्देशेन वा यथोक्तलक्षणविद्यानुष्ठाने प्रथमपक्षे नश्वरप्राकृतभोगैश्वर्यप्राप्तिपर्यवसानेनानिष्टप्राप्तेः द्वितीयपक्षे यावदात्मभाविस्वरूपविरुद्धकैवल्यलक्षणमोक्षप्राप्तिपर्यवसानेनानिष्टप्राप्तेश्चावर्जनीयता, ततः एकविधशरीरनिर्मूलनिवृत्त्यपरविधशरीरप्राप्त्युभयगर्भितपुरुषार्थोद्देशेन यथोक्तलक्षणविद्यानुष्ठान एव स्वरूपानुगुणपरमपुरुषार्थलक्षणमोक्षप्राप्तिश्च प्रतिपादिता - ८ - ततः पञ्चदशादयोऽष्टादशपर्यन्ताश्चत्वारो मन्त्रा यथोक्तलक्षणविद्याकरणतयाऽनुसन्धेयास्स्वरूपानुगुणपरमपुरुषार्थलक्षणमोक्षप्रार्थनागर्भा अव्यभिचारेण तथाविधमोक्षप्राप्तिप्रयोजका आवश्यकोपास्याकारानुसन्धानगर्भा अन्तरादित्यवर्तिपरमपुरुषविषयपरविद्यापराः प्रवृत्ता इति ॥ ५ ॥

तथाचास्यामुपनिषदि कर्मयोगाङ्गिकयैवानुष्ठितया परविद्यया मोक्षप्राप्तेः प्रतिपादनेन 'कर्मयोगनिरपेक्षयैव परविद्यया मोक्षप्राप्तिः प्रत्युत कर्मयोगस्य विरोधित्वमेव' इति वदन्तः कुदृष्टयः परास्ता इति वेदितव्यम् ॥ ६ ॥

श्री॥यत्पुनरत्राह शङ्करः—'अस्यामुपनिषदि 'विद्यया ऽमृतमश्नुते'- इत्येकादशमन्त्रे 'सम्भूत्या ऽमृतमश्नुते'—इति चतुर्दशमन्त्रे च 'अमृतमश्नुते' इत्युक्तिर्नामृतशब्दमुख्यार्थमोक्षविषया -१- अपि तु देवतात्मभावलक्षणार्वाचीनपुरुषार्थविषयैव- २ - पारलौकिकैश्वर्यरूपस्यास्याप्यैहिकैश्वर्यापेक्षयोत्कृष्टत्वेन तदपेक्षया मोक्षरूपत्वेन निर्देशार्हतयोपचारतोऽमृतशब्दबोध्यता सम्भवत्येव- ३ -एवमत्र विद्याशब्दो न मुख्यपरविद्यारूपपरमात्मविद्यापरः -४ अपित्वर्वाचीनदेवताज्ञानरूपोपासनपर एव, अविद्यासाहचर्येणानुष्ठेयतयाऽभिधीयमानविद्यापरत्वावगमात्, मुख्यपरविद्याया अविद्यासाहचर्येणानुष्ठेयत्वासम्भवाच्च - ५ - अत एव चेदृशविद्यासाध्यपुरुषार्थपरतयाऽवगम्यमानस्यामृतशब्दस्यापि साक्षान्मोक्षपरत्व न कथञ्चिदपि वक्तुं शक्यमित्यर्वाचीनपुरुषार्थपरत्वमाश्रितम् - ६ - न च—"विद्यां चाविद्यां च यस्तद्वेदोभय सह । अविद्यया मृत्यु तीर्त्वा विद्ययाऽमृतमश्नुते' इति श्रुत्यैवात्रामृतोपायत्वेन विद्यायाः मृत्युतरणोपायत्वेनाविद्यायाश्च प्रतिपाद्यमानत्वेन तयोरविरोधस्यैव स्फुट प्रतीयमानतया तर्केण कथं तयोर्विरोधस्सुवच इति वाच्यम्, कठवल्ल्युपनिषदि द्वितीयवल्ल्या 'दूरमेते विपरीते विषूची अविद्या या च विद्येति ज्ञाता' ॥ ४ ॥ इति श्रुत्यैव विद्याविद्ययोः परस्परविरुद्धतायाः प्रस्फुटं श्रूयमाणत्वात् -७ द्वयोश्श्रुत्योरविरोधस्य न्यायेनैव समर्थनीयतया न्यायसञ्चारे कृते मुख्यपरविद्याया अविद्यायाश्च स्वरूपतः फलतश्च विरोधस्य दुरपह्नवत्वेनात्र विद्याशब्दोऽर्वाचीनविद्यापरः, अमृतशब्दश्चार्वाचीनफलपर इत्येव स्वीकर्तुं शक्यं, तयोरेवाविरोधसम्भवात् - ८ - विद्याविद्ययोर्हि तेजस्तिमिरयोरिव स्वरूपत एव विरोधः - ९ - अतः प्रकाशवति तिमिरस्येव विद्यावत्यविद्याया उदयस्यैव नावकाश इति न तयोस्साहचर्यसम्भवः - १० - अविद्यया हि प्रवृत्तिधर्मेण विद्याफलमोक्षविरोध्यर्वाचीनस्वर्गादिफलं सञ्चिनोति पुरुष इति फलतोऽपि विद्याविद्ययोर्विरोधो दुर्वारः ११ एवमत्र श्रूयमाणविद्याशब्दस्य मुख्यपरविद्यापरत्वे तन्निष्ठस्यात्रैव ब्रह्मप्राप्तिसम्भवेन तदर्थं क्वचिद्गमनस्यैवानावश्यकत्वेनोत्तरत्र श्रूयमाणाया अर्चिरादिमार्गेण देशान्तरनयनयाचनाया अनुपपत्तेरपि यथोक्तरीत्याऽर्वाचीनदेवतोपासनरूपविद्यापरत्वमेव स्वीकार्यम्' इति ॥ ७ ॥

तदेतत्सर्वं दर्शितप्रकरणस्थविद्याविद्यादिशब्दार्थस्वरूपौपनिषदप्रकरणसन्दर्भासन्दर्भादिसम्यगपरामर्शमूलमविवेचितमरमणीयमेवेति विवेकिनां विदुषामनुपादेयमेव॥ ८ ॥ तथा हि-अस्यामुपनिषदि चतुर्थपञ्चमषष्ठसप्तमाष्टममन्त्रेषु मुख्या परविद्यैवोपदिश्यत इति,तृतीयमन्त्रे मुख्यपरविद्यारहिता अविद्वांस एव निन्द्यन्त इति च निर्विवादं त्वयैवाभ्युपगतम्॥९॥इत्थ प्रकरणप्रस्तुतां मुख्यां परविद्या नवमदशमैकादशमन्त्रेषु श्रूयमाणविद्याशब्दो नाभिधत्ते, किं तु तृतीयमन्त्रनिन्दिताविद्वन्निष्ठारूपां सम्प्रति प्रधाननिरूपणीयत्वेनाप्रस्तुतामपरविद्यामेवाभिधत्ते,मुख्यपरविद्यापरतया तद्रहितनिन्दापरतया च प्रागुपदर्शितमन्त्रव्यतिरिक्तग्रन्थशेषः कृत्स्नोऽप्यपरविद्यानिष्ठपर एवेति कथनं ह्यविवेकविलसितमेवेत्यतिमुग्धजनानामपि सुगमम्; मुख्यपरविद्योपदेशापरविद्यानिष्ठाविद्वन्निन्दयोः क्रियमाणयोरपरविद्याया उपादेयतायास्तत्प्रकरण एव कथनस्यौचित्यलेशाभावात्, पुरस्तादुपरिष्टाच्च परविद्यायां प्रस्तूयमानायां क्रियमाणायां च तद्रहितनिन्दायां मध्ये द्वितीयमन्त्रस्याविद्वद्विषयत्वकल्पनाया अत्यन्तमेवासङ्गतत्वाच्च ॥१०॥ किं च—यमधिकारिणमुद्दिश्य प्रथमत उपदेशप्रवृत्तेयमुपनिषत्, तमेवोद्दिश्य ग्रन्थशेषस्यापि तदपेक्षितार्थप्रदर्शनपरताया एवावश्यकतया मध्येऽधिकार्यन्तरप्रस्तावस्यैवानवकाशेन मध्ये मध्ये क्वचिक्वाचिदविद्वन्निष्ठोपदेशपरत्वकल्पनं हि न कथञ्चिदपि सङ्घटीति ॥ ११ ॥

श्री॥ अथात्राविद्याशब्दार्थः क इति तावद्विचारयामः॥१२॥न तावदज्ञानम्, 'अविद्यया मृत्युं तीर्त्वा'इतिमृत्युतरणोपायत्वेन श्रूयमाणाया अविद्याया मृत्युप्राप्तिहेतुभूताज्ञानरूपत्वासम्भवात् ॥ १३ ॥ किं तु विद्येतरद्वर्णाश्रमविहित कर्मैव ॥ १४ ॥ मृत्युशब्दश्चात्र ज्ञानोत्पत्तिप्रतिबन्धकप्राचीनपुण्यपापलक्षणकर्मवाची ॥ १५ ॥ तन्निवृत्तिहेतुत्वं च वर्णाश्रमविहितकर्मयोगस्य सम्भवति, 'धर्मेण पापमपनुदति' ॥ तै ॥ ना ॥ ६ ॥ ५० ॥ इति श्रुतेः 'कषायपक्तिः कर्माणि ज्ञानं तु परमा गतिः । कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्तते' ॥ इति स्मृतेः 'यज्ञो दान तपश्चैव पावनानि मनीषिणाम्' ॥ गी ॥ १८ ॥ ५ ॥ इति भगवद्वचनाच्च ॥ १६ ॥ तथा चात्राविद्याशब्दार्थस्य वर्णाश्रमविहितकर्मजातस्य विद्योत्पत्तिविरोधिपुण्यपापलक्षणप्राचीनकर्मनिबर्हणमुखेन विद्योत्पत्तिहेतुताया एवात्रगमेन कथमत्र विद्याविद्ययोर्विरोधकथावकाशः ॥ १७ ॥ अत्राविद्याशब्दार्थभूत वर्णाश्रमविहितं कर्मजात फलकर्तृत्व-ममताविषयत्रिविधत्यागपूर्वकमनुष्ठितमेव विवक्षितं, तादृशस्यैव तस्य विरोधिनिबर्हणद्वारा विद्योत्पत्तिहेतुत्वात्॥ १८ ॥ अत एव ह्युक्तं भगवता 'त्यागो हि पुरुषव्याघ्र त्रिविधस्सम्प्रकीर्तितः । यज्ञदानतपःकर्म न त्याज्यं कार्यमेव तत् । यज्ञो दान तपश्चैव पावनानि मनीषिणाम् । एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा फलानि च । कर्तव्यानीति मे पार्थ निश्चितम्मतमुत्तमम्' ॥ गी ॥ १८ ॥ ६ ॥ इति 'स्वे स्वे कर्मण्यभिरतस्संसिद्धिं लभते नरः । स्वकर्मनिरतस्सिद्धिं यथा विन्दति तच्छृणु । यतः प्रवृत्तिर्भूताना येन सर्वमिद ततं । स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः' ॥ गी ॥ १८ ॥ ४६ ॥ इति च ॥१९॥ अत्र 'सङ्गं त्यक्त्वा फलानि च'इत्यनेन'स्वकर्मणा तमभ्यर्च्य'इत्यनेनचार्वाचीनफलादिविषयत्यागपूर्वकं भगवदाराधनरूपतयाऽनुष्ठितस्यैव स्वस्ववर्णाश्रमविहितकर्मजातस्य विरोधिपापनिबर्हणमुखेन विद्योत्पत्तिहेतुत्वमवगम्यते स्पष्टम् ॥ २० ॥ इत्थं त्यागवशेनार्वाचीनफलान्तरप्रसङ्गस्यैव निरुद्धतया फलतोऽपि नात्र विवक्षिताविद्याया विद्यया सह विरोधप्रसङ्गावकाशः॥ २१ ॥ तदिदमेवाभिसन्धायोक्तमस्यामप्युपनिषदि—'कुर्वन्नेवेह कर्माणि' इत्यादिद्वितीयमन्त्रे ॥ २२ ॥ अत्राविद्याशब्दितवर्णाश्रमविहितधर्मानेव कर्मशब्देन निर्दिष्टान्प्रथममन्त्रोक्तत्यागपुरस्सरं विद्याङ्गतयानुतिष्ठतः फलतो न विद्यया सह विरोधप्रसङ्गः, त्यागबलेनार्वाचीनविरोधिफलसम्बन्धलक्षणकर्मलेपासम्भवादिति ह्यभिप्रेतम् ॥ २३ ॥ न चैवं सति —कठवल्ल्युपनिषदि द्वितीयवल्ल्यां 'दूरमेते विपरीते विषूची अविद्या या च विद्येति ज्ञाता' ॥ २ ॥ ४ ॥ इति विद्याविद्ययोर्विरोधः कथमुच्यत इति वाच्यं ? मोक्षाख्यफलभोगार्थानुसन्धानरूपविद्यातदितरपशुपुत्रस्वर्गाद्यैहिकामुष्मिकार्वाचीनफलभोगार्थानुसन्धानरूपा-विद्ययोरेव तत्र विद्याविद्याशब्दाविवक्षितत्वेनानुपपत्त्यभावात्, तयोरत्यन्तविरोधस्य सर्वसम्प्रतिपन्नत्वाच्च ॥ २४ ॥ विद्याविद्याशब्दितयोस्तयोरेव तत्रात्यन्तविरोधोऽभिधीयत इति च तत्र पूर्वोत्तरभागयोः शब्दत एव सुस्पष्टम्॥ २५ ॥ अतो न शब्दैक्यमात्रेण तत्रात्र च विद्याविद्याशब्दयोरेकार्थकत्वमाश्रित्य ज्ञानकर्मणोर्विरोधस्सुवचः ॥ २६ ॥ अस्तु वा तत्राप्यविद्याशब्दः कर्मपरः ॥ २७ ॥ तथापि पशुपुत्रस्वर्गाद्यैहिकामुष्मिकफलभोगहेतुकाम्यकर्मविषय एव तत्रत्याविद्याशब्द इति तु दुरपह्नवं,दर्शितार्वाचीनफलकामनाया एव तत्प्रकरणे निन्द्यमानत्वस्य प्रस्फुटत्वात् ॥ २८ ॥ दर्शितार्वाचीनफलकामिनः काम्यकर्मनिष्ठा एव च सर्वतो निन्द्यन्ते ॥ २९ ॥ यथोक्तं भगवता 'यामिमां पुष्पितां वाचं प्रवदन्त्यविपश्चितः । वेदवादरताः पार्थ नान्यदस्तीति वादिनः। कामात्मानस्स्वर्गपरा जन्मकर्मफलप्रदाम् । क्रियाविशेषबहुलां भोगैश्वर्यगतिं प्रति । भोगैश्वर्यप्रसक्तानां तयाऽपहृतचेतसा । व्यवसायात्मिका बुद्धिस्समाधौ न विधीयते' ॥ गी ॥ २ ॥ ४४ ॥ इति —'त्रैविद्या मां सोमपाः पूतपापा

श्री॥यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते। ते पुण्यमासाद्य सुरेन्द्रलोकमश्नन्ति दिव्यान् दिवि देवभोगान्॥ते तं भुक्त्वा स्वर्गलोकं विशालं क्षीणे पुण्ये मर्त्यलोकं विशन्ति । एवं त्रयीधर्ममनुप्रपन्ना गतागतं कामकामा लभन्ते' ॥ गी ॥ ९ ॥ २१ ॥ इति च ॥ ३० ॥ अत्रार्वाचीनफलकामनायास्तदर्थं क्रियमाणकर्मणां चैव फलतो विद्याविरोधोऽभिधीयत इति स्पष्टम् ॥३१॥न च सर्वेषामेव कर्मणां यत्किञ्चिदर्वाचीनफलहेतुतायाश्शास्त्रेषु समन्ततो दर्शनात्तद्धेतुतया शास्त्रचोदितानां कर्मणां तदभिसन्धिमन्तरेणानुष्ठितानामपि तत्फलसंयोगोऽवर्जनीय एव । अतः कर्मणां विद्याविरोधोऽपि दुष्परिहर एवेति कार्त्स्न्येन कर्मणां त्याग एव विद्यानिष्ठानामावश्यक इत्येव दर्शितशास्त्राणां तात्पर्यमिति वाच्य— गीतास्वष्टादशाध्याये 'त्याज्य दोषवदित्येके कर्म प्राहुर्मनीषिणः । यज्ञदानतपःकर्म न त्याज्यमिति चापरे । निश्चय शृणु मे तत्र त्यागे भरतसत्तम । त्यागो हि पुरुषव्याघ्र त्रिविधस्सम्प्रकीर्तितः । यज्ञदानतपःकर्म न त्याज्यं कार्यमेव तत् । यज्ञो दान तपश्चैव पावनानि मनीषिणाम्। एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा फलानि च । कर्तव्यानीति मे पार्थ निश्चितम्मतमुत्तमं ॥ नियतस्य तु सन्यासः कर्मणो नोपपद्यते । मोहात्तस्य परित्यागस्तामसः परिकीर्तितः ' ॥ ७ ॥ इति ॥ 'अनिष्टमिष्टं मिश्रं च त्रिविधं कर्मणः फल । भवत्यत्यागिना प्रेत्य न तु सन्यासिना क्वचित् ' ॥ १२ ॥ इति ॥ 'स्वेस्वे कर्मण्यभिरतस्ससिद्धि लभते नरः ॥ स्वकर्मनिरतस्सिद्धिं यथा विन्दति तच्छृणु । यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततं । स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः' ॥ ४६ ॥ इति ॥ 'सर्वकर्माण्यपि सदा कुर्वाणो मद्व्यपाश्रयः । मत्प्रसादादवाप्नोति शाश्वत पदमव्ययम्' ॥ ५६ ॥ इति च वदता भगवता वासुदेवेन—'वेदैश्च सर्वैरहमेव वेद्यो वेदान्तकृद्वेदविदेव चाहम् ' ॥ गी ॥ १५ ॥१५॥इति स्वस्वरूपयाथात्म्यमपि स्वयमेवाभिदधता कर्मणां कार्त्स्न्येन त्याज्यत्वात्याज्यत्वविषयवादिविप्रतिपत्तिं प्रदर्श्य त्रिविधत्यागपूर्वकं कर्माणि कर्तव्यानीत्येव निश्चितम्मम मतमिति स्वयं सिद्धान्तं कृत्वा तेषां विद्याविरोधिपापनिवृत्तिपूर्वकं विद्योत्पादनमुखेन परमसिद्धिप्रयोजकतायाः त्यागफलेन मोक्षविरोध्यर्वाचीनफलान्तराप्रयोजकतायाश्च स्पष्टमेव प्रतिपादनेन शास्त्राणां ब्रह्मविद्यानिष्ठस्य कार्त्स्न्येन कर्मत्याग एव तात्पर्यकल्पनस्याविवेकमूलताया अतिस्फुटत्वात् ॥ ३२ ॥ इत्थं चात्राविद्याशब्दविवक्षितकर्मणः प्रत्युत परविद्यात्यन्तोपकारकतया तद्विरोधगन्धानुपलम्भेन विद्याशब्दः परविद्यापर एव भवितुमर्हतीति सिद्धम् ॥ ३३ ॥ न च मुख्यपरविद्यानिष्ठस्यात्रैव ब्रह्मप्राप्तिश्रवणेन क्वचिद्गमनानावश्यकतयोत्तरत्रार्चिरादिमार्गेण क्वचिद्देशविशेषे नयनप्रार्थनादर्शनेनात्रत्यविद्याशब्दो न मुख्यपरविद्यापरो भवितुमर्हतीति वाच्यम् , निश्शेषाविद्यानिवृत्तिमन्तरेण मुक्तेरसम्भावितताया: तदर्थं सर्वेषामेव परविद्यानिष्ठानामर्चिरादिमार्गेण देशविशेषगमनावश्यकतायाश्च सूत्रकाराशयानुरोधेनैव श्रीभाष्यकारैश्श्रीभाष्यादौ निर्धारितत्वात् आसृत्युपक्रमाधिकरणे विदुष उत्क्रान्त्यभावकथाया अत्रैव निश्शेषाविद्यानिवृत्तिगर्भब्रह्मप्राप्तिकथायाश्च दूरोत्सारितत्वाच्चात्रत्यविद्याशब्दस्य मुख्यपरविद्यापरत्वे क्षतिलेशायोगात् ॥ ३४ ॥

अथ का सा मुख्या परविद्या? या कर्मानुष्ठानं न सहते तेजस्तिमिरमिवेति भवन्तोऽभिमन्यन्ते इति पृच्छामः ॥ ३५ ॥ ब्रह्माद्वैतमिति द्वैताभावविशिष्टब्रह्मविषयकविज्ञानमेव मुख्या परविद्या, सा चाद्वैतविषयकत्वादेव द्वैतानुसन्धानगर्भं कर्मानुष्ठानं न सहत इति चेत् ॥ ३६ ॥ तदेवासम्बद्धम् , क्वचित्प्रसिद्धस्यैवार्थस्य क्वचिदभावप्रतीतेस्सर्वलोकसाक्षिकतया ब्रह्मेतरस्य वस्तुनः क्वचित् प्रतिपत्तिस्वीकारे ब्रह्मणि द्वैतप्रतीतेरपरिहार्यत्वेन तदभावप्रतीतेरयोगात्, तदस्वीकारे च क्वचिदप्यप्रति-

श्री॥पन्नस्य द्वैतस्य ब्रह्मण्यभावप्रतीतेस्सुतरामेवासम्भवाच्च ॥ ३७ ॥ न हि खलु शशस्य शृङ्गं क्वाप्य-प्रसिद्धमिति जानन्ननुन्मत्तः कश्चिदपि पुरुषः'इह शशशृङ्ग नास्ति'इति प्रत्येति, व्यवहारति वा॥३८॥ तस्मात् , ब्रह्माद्वैतमिति ज्ञान नानुन्मत्तस्य कस्यचिदनाहार्यं क्वचित्कदाचित्सम्भवितुमर्हति ॥ ३९ ॥ न तद्विज्ञान परविद्यारूप वा भवितुमर्हति ॥ ४० ॥ अथ तत्त्वमस्यादिवाक्यार्थज्ञानरूप निर्विशेषब्रह्म-स्वरूपमात्रविषयकं निर्विकल्पकविज्ञानमेव मुख्यपरविद्यारूपम् ; तच्च कर्मज्ञानानुष्ठानादिकं न सहत इति चेत् ॥ ४१ ॥ तदप्यसम्बद्धम् —तत्त्वमस्यादिसमानाधिकरणवाक्याद्विशेष्यविशेषणवाचकपद-द्वयप्रतिपन्नयोर्विभिन्नप्रवृत्तिनिमित्तविशिष्टयोरर्थयोरैक्यबोधनस्यैव सम्भवेनेदृशनिर्विकल्पकबोधस्य लो-कव्युत्पत्तिविरोधेन कदाप्यसम्भवात्तदसम्भवस्य सोपपत्तिक श्रीभाष्यादिषु निर्धारितत्वात् तदुदयस्वी कारेऽपि वा यत्किञ्चिदेकवस्तुस्वरूपमात्रविषयकनिर्विकल्पकज्ञानस्य वस्त्वन्तरविषयकज्ञानादिविरोधि-त्वासम्भवेन तस्य कर्मादिज्ञानैतदनुष्ठानादिविरोधित्वासम्भवाच्च ॥ ४२ ॥ उपगच्छन्ति हि प्रत्युत गोत्वादिविषयकनिर्विकल्पकज्ञान गवादिविशिष्टज्ञानहेतु तान्त्रिकाः ॥ ४३ ॥ तस्मात्परविद्यायाः कर्मानुष्ठानासहिष्णुत्वबलेनात्रत्यविद्याशब्दस्यार्वाचीनदेवताविज्ञानपरत्ववर्णनमुपनिषत्तत्त्वार्थापरिज्ञानमू-लकोलाहल एवेति सिद्धम् ॥ ४४ ॥ उपनिषत्स्वरूपपर्यालोचने तु प्रथमतः परविद्योपदेशमेवोप-क्रम्य तदङ्गतयैव द्वितीयमन्त्रे —'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः' इत्यादिना यावज्जीवं कर्मानुष्ठानमवश्यं कर्तव्यं विधाय ततो विद्याकर्मणोरेकैकमात्रानुष्ठानेचानिष्टावाप्तिमप्यभिधाय तत एव हेतोरुभयोरेवाऽऽप्रयाणं सहानुष्ठेयत्वं 'विद्या चाविद्या च यस्तद्वेदोभयं सह' इत्यनेनाभिधीयत इति स्पष्टमेव विज्ञायते ॥ ४५ ॥ अनेकमन्त्रेषु ब्रह्मणोऽनेकेषा कल्याणगुणानामसकृद्वर्णनेन विद्यापि तादृ-शकल्याणगुणविशिष्टब्रह्मासकृदनुसन्धानरूपा यावत्पुरुषार्थप्राप्त्यनुदिनमनुवर्तनीयैवचाभिमताऽवग-म्यते, न तु कादाचित्कवाक्यार्थज्ञानमात्ररूपेत्यपि स्पष्टम् ॥ ४६ ॥ तदिद सर्वमभिसन्धायैव हि 'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः' इति 'विद्यां चाविद्यां च यस्तद्वेदोय सह' इति चेयमुपनिषदुद्घोषयति ॥ ४७ ॥ तस्मादङ्गाङ्गिभावेनाविद्याशब्दितं वर्णाश्रमादिधर्मलक्षणं विद्योदयो-पचयहेतुभूतं कर्म अनेककल्याणगुणविशिष्टब्रह्मासकृदनुसन्धानलक्षणविद्याचेत्युभयं यावदायुषंयथाधि-कारमहरहरनुष्ठेयमित्येवोपनिषदभिमतमिति सिद्धम् ॥ ४८ ॥ अत एव च सूत्रकारेण भगवता बाद-रायणेनापि 'आवृत्तिरसकृदुपदेशात्' ॥ ४ ॥ १ ॥ १ ॥ 'अप्रयाणात्तत्रापि हि दृष्टम्' ॥ ४ ॥ १ ॥ १२ ॥ इति सूत्राभ्यां विद्यास्वरूपस्यासकृदनुसन्धानरूपत्वमाप्रयाणादहरहरनुवर्तनी-यत्वं चाभिहितम् ॥ ४९ ॥ 'अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात्' ॥ ४ ॥ १ ॥ १६ ॥ 'सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्' ॥ ३ ॥ ४ ॥ २६ ॥ 'सहकारित्वेन च' ॥ ३ ॥ ४ ॥ ३३ ॥ इति सूत्रैर्वर्णाश्रमादिधर्मलक्षणकर्मणां विद्योदयहेतुत्वमहरहरभ्यासाधेयातिशयाया विद्याया अनुग्र-हार्थमाप्रयाणादनुष्ठेयत्वरूपं तत्सहकारित्वं च प्रस्फुटमेव दर्शितम् ॥ ४९ ॥ तस्मादेतद्विरुद्धवादो वादिना यथावस्थितशास्त्रार्थानवबोधमूलकोलाहल एवेति सिद्धमित्यलं बहुना ॥ ५० ॥

ईशावास्येत्युपनिषदिय वाजिनां संहितान्त-
स्साङ्गां वर्णाश्रमनिगादितैः कर्मभिर्ब्रह्मविद्याम् ।
आतन्वन्त्याद्यनुदिनविनिष्पादनीयाम्मुमुक्षोः
कैवल्येच्छामपि विजहतः प्राह कैङ्कर्यदां च ॥ ५१ ॥

व्याख्यानव्यक्तसारामुपनिषदमिमां स्वैरमास्वादयन्तोऽ-
मन्दानन्दा भवेयुस्सकलसुमनसो वर्जयित्वा कुदृष्टीन् ।
सारासारानभिज्ञानिन करटगणान्निम्बवृत्तीन्विहाय
ज्ञातास्वादा वमन्तागमफलभरितामाम्रवन्या पिकाद्यैः ॥ ५२ ॥

भिन्नत्व पारमार्थ्यं द्वयमपि जगतो नेष्यते यैः परस्मा
त्तेषां कण्ठेगडुस्सन् क्रकचति हृदये चापि वेदान्त एषः ।
यो ब्रह्म प्राह चेशं तदितरदखिल चापि तस्येशितव्य
प्रब्रूते भोग्यभोगोपकरणविधया शेषभावैकशीलम् ॥ ५३ ॥

आध्यात्मिक्यां सरण्या मम हृदयरथं स्वामियन्त्रश्वरूपाः
श्रीशः श्रीभाष्यकारो भुवनगुरुवरो रम्यजामातृयोगी ।
सज्जास्सञ्चारयन्तो व्यदधत दृढसङ्कल्पितप्राच्यलेखा
निर्बाधां पद्धतिं ता विहरणरसिका निर्विशङ्कं श्रयन्ताम् ॥ ५४ ॥

ब्रह्मायुरुत्तरार्धे श्रीश्वेतवराहकल्प आद्येऽस्मिन् ।
वैवस्वताख्यसप्तममन्वन्तरगे चतुर्युगे चलति ॥ ५५ ॥

अष्टाविंशे च कलौ वसुगगनव्योमबाणसङ्ख्यायाः ।
परिपूर्णे पराभववर्षेऽर्के मिथुनभाजि नवमदिने ॥ ५६ ॥

श्रीमद्वेङ्कटशैलश्रीमदनन्तार्यसिंहपीठस्थः ।
ईशावास्योपनिषद्भाष्यं श्रीरङ्गसूरिरातनुत ॥ ५७ ॥

इत्यष्टादशमन्त्रव्याख्यानम् ॥ १८ ॥

॥ ईशावास्योपनिषद्भाष्यं समाप्तम् ॥